गत्यनुकूलव्यापारविशेषः कृषतेरर्थः। बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हृधात्वर्थः। एषामुक्तार्थे कर्त्तुरित्येन कर्मत्वम् एवञ्च ग्रामसम्बन्धी अजानिष्ठोत्तरदेशसंयोगाऽनुकूलव्यापारोदेवदत्तवृत्तिरिति बोधः एवं भारं बहतीत्यादावपि बोध्यः।

अर्थनिबन्धनेयं संज्ञेति। अकथितञ्चेत्यनेन या संज्ञा साऽर्थनिबन्धनाऽर्थनिमित्तिका, न तु स्वरूपाऽऽश्रया स्वरूपनिमित्तिकेति तदर्थः। नचैतत्सूत्रविहितकर्मसंज्ञाया अर्थनिमित्तकत्वे किंप्रमाणमिति वाच्यम्। तद्राजसूत्रस्थभाष्यकैयटयोरेव प्रमाणत्वात्। तत्रहि, अहमपीदमचोद्यं चोद्ये इत्युक्तम्। असौ अस्मान्मामचोद्यं चोदयतीति तदर्थः। तत्र पृच्छिपर्य्यायस्यचुरेदपि द्विकर्मकत्वं दृश्यते उक्तसंज्ञायाः स्वरूपनिमित्तकत्वे उक्तभाष्यकैयटौ व्याकुप्येयाताम् चोद्ये इत्यत्र कर्मणि प्रत्यये अस्मच्छब्दात्प्रथमा इदम्शब्दाद्द्वितीया। अत एव मारीचमुच्चैर्वचनं महार्थमिति भट्टिकाव्यप्रयोगोपपत्तिरिति प्राञ्चः। शेखरकृतस्तु परिगणिताऽतिरिक्तानां परिगणितधातुसमानार्थकानां येषां धातूनां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वात्कर्तुरित्येव कर्मत्वसिद्धौ संज्ञाया अर्थनिमित्तकत्वमनादेयम्। अत एव, न 'आख्यातोपयोगे' इति सूत्रस्थभाष्यपरिगणनभङ्गापत्तिः तस्या अर्थनिमित्तकत्वे तु भाष्योक्त-परिगणनस्य स्पष्टैवाऽसङ्गतिः, तत्समानार्थकानामन्येषामपि द्विकर्मकत्वात्। किञ्चोभयार्थकयाचिग्रहणेनैव बलिं भिक्षते वसुधामित्यादावपि कर्मत्वसिद्धौ परिगणने भिक्षधातुग्रहणस्य वैयर्थ्यापत्तेश्चेत्याहुः।

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यमिति। वार्त्तिकम्। सत्यकर्मकधातुयोगे देशकालभाव-गन्तव्याऽध्ववाचकशब्दानां कर्मसंज्ञा वक्तव्येति तदर्थः । अकर्मकधातूनां स्वार्थकरणकव्यापने शक्तिस्तथा व स्वार्थकरणकव्याप्त्यनुकेलव्यापार इत्यर्थे मासमास्ते इत्यादौ व्याप्तिरूपफलाश्रयत्वान्माणवकस्य कर्त्तुरिति कर्मत्वम्। देवदत्तकर्तृक मासनकरणक माससम्बन्धिव्याप्त्यनुकूलव्यापार इति बोधः। अत्र देशपदेन देशत्वाऽवान्तरधर्मवान् कुरुपञ्चालादिरेव गृह्यते न तु सामान्यतो देशः, नवा ग्रामत्वादिना ग्रामः। अत एव कुरून् स्वपिति तिष्ठति वेति प्रयोगो भवति न भवति देशं ग्रामं वा स्वपिति तिष्ठति इति प्रयोगः। कालपदेन च कालत्वाऽवान्तरधर्मवान् माससम्बत्सरादिरेव गृह्यते न तु सामान्यतः कालः। एवञ्च मासं सम्बत्सरं वाऽस्ते इति प्रयोगो भवति न

भवति कालमास्त इति। भावपदेन च गोदोहनादिरेव न तु तदतिरिक्तः तेन गोदोहमास्ते इति प्रयोगः। न च गोदोहादिशब्दस्य कालार्थकत्वात्कालग्रहणेनैवोक्तप्रयोगोपपत्तौ भावग्रहणं व्यर्थमिति वाच्यम्। घञन्तेन प्रतिपाद्यमानस्यापि कालस्य कर्मत्वं भवतीति प्रपञ्चार्थत्वेन भावग्रहणस्य साफल्यात्। अध्वपदेनाऽध्वत्वाऽवान्तरधर्मवतः क्रोशयोजनादेरेव ग्रहणं न तु समान्यतोऽध्वनः। तेन क्रोशं योजनं वाऽऽस्ते देवदत्त इति भवति न तु अध्वानमास्ते इति। प्राचीनोक्तं प्रकृतवार्त्तिकस्य कर्मसंज्ञाविधायकत्वं खण्डयति। भाष्ये कर्मसंज्ञाविधायकत्वेनादृष्टत्वान्नास्य कर्मसंज्ञाविधायकत्वम्। नचास्य वचनस्यैवोक्तसंज्ञाविधायकत्वमस्तीति वाच्यम्। अकर्मकधातुप्रकृतिगणयन्ताः कथं द्विकर्मका इति पूर्वपक्षे जाते कालभावाऽध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्। देशश्चेत्येवाकथितसूत्रे भाष्ये उक्तत्वात्। तत्र प्रसिद्धार्थकहिशब्दप्रयोगात्कालादि कर्म प्रसिद्धमेव पूर्वसूत्रबोधितमेवेति बोध्यते। न च हिशब्दस्य वाक्यालंकारार्थ-कत्वादुक्तऽभिप्रायकत्वाऽभावेनास्य विधायकत्वेन किमपि प्रतिबन्धकमिति वाच्यम्। कालाऽध्ववाचकयोः कर्तुरित्येव कर्मत्वसिद्धौ कालाध्वानौ कर्मवदिति वार्त्तिकं व्यर्थमिति रीत्यास्य वार्त्तिकप्रत्याख्याने घटं करोतीत्यादाविव प्राकृतमेवैतत्कर्म पूर्वसूत्रबोधितमेवेति 'कालाध्वनोरितिसूत्रस्थभाष्योक्तेरेव प्रतिबन्धकत्वात्। अस्या-ऽविधायकत्वादेव, समायां समायां विजायत इति विग्रहकथनपरस्य समां समां विजायते इति सूत्रस्थभाष्यस्य सङ्गति। अन्यथाऽनेन द्वितीयाया एव साधुत्वादत्तदसङ्गतिः। तस्मादुक्तप्रकारेणाऽकर्मकधातूनां कालादिकर्मत्वाद्द्विकर्मकत्वमित्येव तत्तात्पर्य्यमित्यलम्।

गतिबुद्धिप्रत्यवसानार्थेति। गत्यर्थकबुद्धयर्थकप्रत्यय-वसानार्थकशब्दकर्मकाऽकर्मकधातूनामनुत्पन्ने णिचि कर्त्तुरुत्पन्ने णिचि कर्मत्वमिति तदर्थः। शब्दकर्मकेत्यत्र कर्मपदं कर्मकारकपरं न तु कर्तरि कर्मव्यतीहारे इत्यत्रेव क्रियापरं व्याख्यानात्। अत एव शब्दार्थकह्वायिक्रन्दिधातोरण्यान्ता-वस्थकर्त्तुरार्थन्तावस्थायां न कर्मत्वम्। णिच्पदं चात्र हेतुमणिणज्बोधकत्वादेव (भक्षेरहिंसार्थस्य ने) ति निषेधश्चरितार्थः। अन्यथा नित्यण्यन्तस्य चौरादिकस्य भक्षे रण्यन्ताऽवस्थाऽसम्भवात्तत्कर्तुः कर्मत्वाऽप्राप्त्या निषेधो व्यर्थ एव स्यादिति भावः। ननु णिच्प्रकृतिकधात्वर्थव्यापारप्रयोज्यफलाश्रयस्यैव णिजर्थव्यापारप्रयोज्यफलाश्रयस्यापि कर्तुरित्येव कर्मत्वसिद्धौ गतिबुद्धीति सूत्रं व्यार्थमिति चेन्न। णिजर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं चेत्तर्हि

गत्यर्थादिप्रकृतिकानामेवेति नियमार्थत्वेन तस्य सार्थक्यात्। तेन पाचयत्योदनं देवदत्तेनेत्यादौ न देवदत्तस्य कर्मत्वम्। पूर्वसूत्रे णिजर्थव्यापारप्रयोज्य-फलाश्रयातिरिक्तत्वेन संकोचेन सूत्रस्य स्वांशे चारितार्थ्यमिति। गतीत्यादि किमित्यादिना तदेवाऽनूद्यते इति बोध्यम्।

अण्यन्तानां किमिति। अयम्भावः, सूत्रेऽणीत्यस्याऽभावे णौ कर्त्तुः कर्मत्वमित्यर्थे गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्र इत्यादौ देवदत्तस्यापि कर्मत्वं दुर्वारम्, तत्सत्त्वेतुदेवदत्तस्याऽणयन्तावस्थकर्तृत्वाऽभावेन नोक्तापत्तिरिति। उक्तस्थले बोधस्तु यज्ञदत्तकर्मकगमनाऽनु-कूलदेवदत्तकर्तृक-व्यापारानुकूलविष्णुमित्रकर्तृकोव्यापार इति दिक् ।

नियन्तृकर्तृकस्येति। ननु वहधातोर्वाहकर्तृकत्वान्नियन्तृकर्तृकत्वाऽभावेन निषेधप्रतिषेधोऽनुपपन्न इति चेन्न। नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्य बहेरित्यर्थे तदुपपत्तेः। न च प्रापणार्थकस्य बहेर्गत्यर्थत्वाभावात्कर्मत्वाप्राप्त्या तन्निषेधवार्त्तिकारम्भो व्यर्थ इति वा च्यम्। ग्रामं प्राप्त इत्यादौ गतिं विना ग्रामप्राप्त्यसम्भवादाक्षिप्तगत्याऽपि गत्यर्थत्वमित्यभिमानेन तदारम्भस्य सार्थक्यादिति।

ननु गतिबुद्धीतिसूत्रे बुद्धिपदेन ज्ञानस्य ग्रहणाच्चक्षुरादीन्द्रिय-जन्यज्ञानार्थकानां धातूनां बुद्ध्यर्थत्वात्सूत्रेणैव दृशेश्चेति वार्तिकोदाहरणस्यापि गतार्थत्वाद्वार्त्तिकं व्यर्थमेवेत्याशङ्क्य समाधत्ते- सूत्रे ज्ञानसामान्यार्थज्ञामेवेति। उक्तवार्त्तिकं व्यर्थं सञ्ज्ञापयति गतिबुद्धीति सूत्रे बुद्ध्यर्थपदेन ज्ञानसामान्यार्थनामेव ग्रहणं न तु ज्ञानविशेषार्थानामिति। एवञ्च सूत्रेण वार्त्तिकोदाहरणस्यागतार्थत्वात्तदावश्यमिति स्वांशे चारितार्थ्यं जातं फलञ्च ज्ञापनस्य स्मारयति घ्रापयति देवदत्तेनेत्यादौ देवदत्तस्य कर्मत्वाऽभावरूपमिति भावः।

ननु शब्दं करोतीत्यर्थे 'शब्दवैरकलहे'ते क्यङि तदन्ताण्णिचि शब्दायिधातोर्धात्वर्थेनोपसंगृहीतस्य शब्दरूपकर्मणो धात्वर्थकुक्षि-प्रवष्टित्वेनाऽकर्मकत्वाद्गतिबुद्धीतिं सूत्रेण कर्मसंज्ञा दुवरित्यत आह शब्दायतेर्नेति। शब्दायधातोरणि कर्त्तुः णौ कर्मत्वंनेति तदर्थे शब्दाययति देवदत्तेन यज्ञदत्त इत्यादौ न देवदत्तस्य कर्मत्वापत्तिरिति दीक्षिताऽऽशयः।

नागेशास्तु शब्दकर्मेत्यत्र कर्मपदस्य क्रियापरत्वे शब्दक्रियाणा-मित्यर्थेऽकर्मकत्वात्प्राप्तगतिसंज्ञावारणाय ह्वाययति शब्दाययति क्रन्दयतीनां

कर्मत्वप्रतिषेधस्य भाष्यकृतोक्तत्वाच्छब्दकर्मकाणामित्यर्थे तदनुक्त्याऽस्य धातोः शब्दरूपकर्मणो धात्वर्थेनोपसंगृहीतत्वेऽपि ह्वयतेरिव बहिर्भूतपुत्रादिकर्मणः सम्भवेन तदभावे विनिगमकाऽभावादकर्मकत्वाऽभावेन कर्मत्वाऽऽप्राप्त्या तन्निषेधार्थं वार्त्तिकमिदं व्यर्थमेवेत्याहुः।

ननु गतिबुद्धीति सूत्रेऽकर्मकपदस्य न विद्यते कर्म येषामित्यर्थे सकर्मकाणामपि कर्मणोऽविवक्षयाऽकर्मकत्वाद्देवदत्तेन पाचयतीत्यादौ देवदत्तस्याऽपि कर्मत्वापत्तिरित्यत आह- येषां देशकालादिभिन्नं कर्म न सम्भवतीत्यादि। अयम्भावः, नियमस्य सजातीयाऽपेक्षत्वात् गतिबुद्धीति सूत्रस्य सकर्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं चेत्तर्हि गत्यर्थादीनामेवेति नियमार्थत्वेनाऽऽसयत्सलिले पृथ्वीमित्यादौ पूर्वसूत्रेणैव कर्मत्वसिद्धौ सूत्रेऽकर्मकपदेन सामर्थ्याद्देशकालादि-भिन्नकर्माऽभाववतो ग्रहणादवतरणदलोक्त-प्रयोगस्थधातोर्देश-कालाद्यतिरिक्तस्यौदनादिरूपकर्मणः सत्त्वेन तदविवक्षणेऽप्यकर्मकपदेनाऽ-ग्रहणान्नोक्तापत्तिशंकाकलंककणिकेति प्राञ्चः।

शेखरकृतस्तु, अविवक्षितकर्मकेभ्यो धातुभ्यः कृतपूर्वीकटमित्यादौ भाष्यकृता कैयटेन च भावे क्तादीनामङ्गीकारादत्र सूत्रेऽकर्मकपदेनाऽ-विवक्षितकर्मकाणमपि ग्रहणम्। 'णेरणाविति सूत्रे कैयटेन निवृत्तव्यापाराल्लूधातोर्णिचि लावयति केदारं देवदत्त इत्यादौ कर्मद्वितीयान्तकेदारस्य प्रयोगाच्चोक्तविधानामप्यकर्मकपदेन ग्रहणम्। नचाऽर्थान्तरे शक्त्या तस्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यम्। तत्त्वप्रत्यभिज्ञायाऽर्थान्तरत्वाऽभावेन तत्र शक्तेर्वक्तुमशक्यत्वात्। अर्थान्तरे वृत्तेरित्यस्योदाहरणन्तु नदी स्यन्दते इत्याद्यर्थकं नदी वहतीत्यादीत्याकरे स्पष्टम्। कर्मणः शेषत्वविवक्षयाऽकर्मकत्वेन मातुः स्मर्यत इत्यादौ भावे लस्य 'अधीगर्थेति सूत्रे भाष्ये उदाहृतत्वेनाऽविवक्षित-कर्मकाणमप्यकर्मकपदेन ग्रहणमित्याहुरित्यलम्।

ननु एष्वर्थेष्वभिनिविष्टानामिति समर्थसूत्रस्थभाष्यप्रयोगात् अभिनिविशश्चेत्यत्र परिक्रयणे सम्प्रदानमिति सूत्रादन्यतरस्यां ग्रहणाऽनुवृत्तिरित्याह परिक्रयणे सम्प्रदानमित्यादि। सूत्रेऽविकृत-रूपश्रवणादविकृताया अभिनिविशित्यानुपूर्व्या यत्र श्रवणं तत्रैव अभिनिविशश्चेत्यस्य प्रवृत्तिरिति कल्पनेनोक्तभाष्यप्रयोगे पापेऽभिनिवेश इत्यत्र चाऽऽपत्तिपरिहारादन्यतरस्यां ग्रहणाऽनुवृत्तौ व्यवस्थित-विभाषाऽऽश्रयणे च प्रमाणाऽभावान्मूलोक्तमयुक्तमेवेति। न च निविशते

यदिशूकशिखापदे सृजति सा क्रियतीमिव न व्यथामिति नैषधीयपद्ये का गतिरिति वाच्यम्। अभिनिविशति संघातस्य विवक्षणेन तादृशसंघातपूर्वस्यैव विशतेराधारस्य कर्मत्वविधानेन तत्रोक्तऽऽ-पत्तेरयोगादिति नागेशा इति दिक्।

ननु मशकार्थे धूम इत्यस्याऽर्थशब्दस्य निवृत्तिपरत्वेन मशकनिवृत्यर्थे धूम इत्यर्थ इव भाष्योक्तस्याशयार्थस्य नेत्यस्याऽशिनिवृत्यर्थस्य नेत्यर्थस्तत्फलितमाह अभुक्तार्थस्यनेति। भाष्ये तु एतस्योदाहरणस्य वने उपविश्य त्रिरात्रमुपवसतीत्यर्थाश्रयणादिदं प्रत्याख्यातम्। नचैवमुपोष्य रजनीमेकामित्यादौ का गतिरिति वाच्यम्। कालाध्वनोरित्यनेनैव तत्र द्वितीयोपपत्तेरित्यलम्।

उपपदविभक्तिमाह- उभसर्वतसाविति। उभसर्वयोस्तसौ उभसर्वतसौ उभांशे उभयशब्दनिष्ठप्रकृतित्वस्योभशब्दे आरोपादुभयशब्दप्रकृतिकत्वं षष्ठ्यर्थः। उपपदविभक्तीनां सम्बन्धोऽर्थ इति बोध्यम्। उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोगे द्वितीयेति कारिकार्थः। धिगिति। धिक्शब्दयोगेऽऽपि द्वितीया कार्य्येति तदर्थः। धिक कृष्णऽभक्तमित्यस्य कृष्णाऽभक्तसम्बन्धिनिन्देत्यर्थः । आम्रेडितान्तेष्विति। कृतद्विर्वचनेष्वित्यर्थः । इदमुपर्य्यादिष्वित्यस्य विशेषणं तेन उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धय इत्यत्र न द्वितीयाप्रसक्तिः उपरिबुद्धीनामुपरीत्यर्थेन तस्याम्रेडितान्तत्वाऽभावात् ततोऽन्यत्राऽपीति। अन्यशब्दयोगेऽपि द्वितीयेति तदर्थः। तेन फलतिपुरुषाऽऽराधनमृते, आषाढी यावच्छुद्धः, आरभ्य तस्यां दशमी तु यावत्प्रपूजयेत्पर्वताराजपुत्र्याः। इत्यादिषु ऋते शब्दयोगे यावच्छब्दयोगे च द्वितीयासिद्धरिति दिक् ॥

जपमनुप्रावर्षदिति। लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्वं, ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वम्, तथा च जपस्य वर्षाज्ञानजनकज्ञानविषयीभूतत्वात्लक्षणत्वेन तस्मिन्ननुद्योत्ये सति अनोः कर्मप्रवचनीयत्वेन तद्योगे लक्षणवाचकाज्जपशब्दाद्द्वितीया। जपाऽभिन्नहेतुज्ञानजन्य-ज्ञानविषयो वर्षणमिति बोधः॥

ननु हेतुत्वाऽविवक्षणे कर्मप्रवचनीयसंज्ञायाः, धनेन कुलमित्यादौहेतुतृतीयायाश्च सावकाशत्वात्स्वस्वांशे लब्धाऽवकाशरूपतुल्यबलविरोधस्य सत्त्वाद्विप्रतिषेधसूत्रप्रवृत्त्या परत्वात्तृतीयाऽऽपत्त्या नदीमन्ववसितेति द्वितीयाघटितरूपं न स्यादित्याशंक्य समाधत्ते परापि हेतावितितृतीयाऽनेन बाध्यत इति। लक्षणेत्थंभूताख्यानेति सूत्रेणैव

संज्ञासिद्धावनुर्लक्षणे इत्यनेन पुनः संज्ञाविधान सामर्थ्यात्परस्या अपि तृतीयाया बाण्धेनोक्तप्रयोगोपपत्तौ न कापि बाधा दृष्टिगोचरीभूता भवतीति भावः। न च लक्षणेत्थम्भूताऽऽख्यानेति सिद्धसंज्ञाया जपमनुसिञ्चतीत्यत्र षत्वाऽभावसाधकत्वेन चारितार्थ्याद्द्वितीयाविधायकत्वे मानाऽभावेन तदर्थमनुर्लक्षणे इत्यस्यावश्यकत्वात्पुनः संज्ञाविधानसामर्थ्यादिति कथनमनुपपन्नमिति वाच्यम्। लक्षणेत्थमिति सूत्रस्योपसर्गसंज्ञाबाधेन चारितार्थ्येऽपि कर्मप्रवचनीयेति सूत्रे तदुपस्थित्या द्वितीयाप्राप्तेः सुलभत्वेन अनुर्लक्षणे इत्येतद्विहितसंज्ञाया निरवकाशत्वस्य स्पष्टत्वादिति दिक् । नदीमन्ववसितेति। नद्या सह सम्बद्धेत्यर्थस्तत्र तृतीयार्थेऽनुद्योत्यं साहित्यं तच्च प्रकृतेऽनुयोगित्वलक्षणमेव तथा च नद्यनुयोगिकसम्बन्धप्रतियोगित्ववती सेनेति बोधः।।

अपिः पदार्थेति। पदस्याऽप्रयुज्यमानपदान्तरस्याऽर्थः पदार्थः, तद्द्योतकोऽपिः कर्मप्रवचनीयसंज्ञकोऽभवतीत्यर्थः । सर्पिषोऽपीति। अत्राऽप्रयुज्यमानस्य विन्दुरित्यादेः पदस्यार्थोऽपिद्योत्यः। सम्भावनायां लिङिति। 'उपसंवादाऽऽशङ्कयोश्चेति सूत्रस्थभाष्यपठितेन (उपसंवादाशङ्कयोर्लिङ् ) इति वार्त्तिकेनेति भावः। तत्राऽऽशङ्कोत्प्रेक्षा, संभावनापि उत्कटकोटिकाऽऽशङ्कैव। अपेः कर्मप्रवचनीयत्वात्तद्द्योत्य-सम्बन्धमाह, तस्या एवेति। सम्भावनाया एवेत्यर्थः। विषयीभूते भवने इति। प्रकृतार्थभवने इत्यर्थः। कर्तृदौर्लभ्यमिति। अत्र कर्तुर्दौर्लभ्यमिति षष्ठीतत्पुरुषो बोध्यः। स्वदौर्लभ्यप्रयुक्तदौर्लभ्य-वत्त्वरूपसम्बन्धोऽपिद्योत्यः। विन्दुना कर्तृत्वादुक्तसम्बन्धेन स्यात्पदवाच्यक्रियायामन्वीयते इत्यर्थः। तदाह- अपि शब्दबलेनेत्यादि। एवञ्च सर्पिरवयवविन्दुदौर्लभ्य-प्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनेति बोधः नन्वेवं कर्मप्रवचनीयसंज्ञकाऽपिद्योत्येऽर्थे सर्पिषोन्वयेन तस्य कर्मप्रवचनीययुक्तत्वाद् द्वितीया स्यादित्याशङ्क्य समाधत्ते- द्वितीया तु नेह प्रवर्त्तत इति। सर्पिषो विन्दुना, योगो, नत्वपिना, न च परम्परया तेनाऽपि योग एवेति वाच्यम्। कर्मप्रवचनीयद्योत्योक्तसम्बन्धे-नाऽपिशब्देऽन्वयाऽभावात्। एवञ्च न द्वितीयाऽऽपत्तिः कर्मप्रवचनी-यद्योत्यसम्बन्धप्रतियोगिवाचकाद्द्वितीयेत्यर्थे प्रकृतेऽपिद्योत्यस्योक्तसम्बन्धस्य विन्दुः प्रतियोगी न सर्पिरिति न ततो द्वितीया, स्पष्टप्रतिपत्त्यर्थमपिद्योत्यविन्दोः प्रयोगेऽपि (उपपदविभक्तेरि) ति न्यायेन द्वितीयां बाधित्वा प्रथमैवेति। अपेः कर्मप्रवचनीयत्वे फलमाह- अनुपसर्गत्वादिति।

अपेः कर्मप्रवचनीयत्वेनोपसर्गत्वाऽभावात् स्यादित्यत्र न षत्वमिति दिक्।

कालाध्वनोः। अत्यन्तसंयोगो निरन्तरं सम्बन्धः, स च गुणक्रियाद्रव्यैरभावेन च, तेन मासं भोजनाऽभाव इत्यादि सिद्धम्। गुणादिभिः कालाध्वनोरत्यन्तसंयोगे सति प्रत्यासत्त्या कालाऽध्ववृत्तिभ्यां द्वितीयेत्यर्थः। उदाहरणन्तु, मासमधीत इत्यादि, बुद्धिस्थया-वदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः। नचैकादश्यां रात्रौ जागृयादित्यादावपि द्वितीया दुर्वारेति वाच्यम्। अधिकरणत्वविवक्षणाद्-द्वितीयाया अप्राप्तेः।

२. कर्मत्वं तु न करणंव्यापार्यत्वम्। तद्धि करणजन्यक्रियानुकूल-व्यापाराश्रयत्वम्। तच्च दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्थे दात्रेऽतिव्याप्तम्। नापि परसमवेतक्रिया-जन्यफलशालित्वम्। गमिपत्योः कर्तत्वस्य पूर्वस्मिन्देशे, त्यजेश्चोत्तरस्मिन् , स्पन्देः पूर्वापरदेशयोः प्रसङ्गात्। नदी वर्धत इत्यादौ वृद्धेरवयवोपचयस्य परंपरया तीरप्राप्तिफलकत्वात् तज्जन्यफलाश्रये तीरेऽतिव्याप्तेः।

**अत्राहुः**- त्यजिगमिप्रभृतीनां स्पन्दमात्रं नार्थः। नहि त्यजति गच्छतीत्यनयोः प्रतीत्योरविशेषं कश्चिदभ्युपैति। एवं च त्यजेर्विभागेन, गमेरुत्तरसंयोगेन, पतेश्चाधः संयागेनावच्छिन्नाः स्पन्दा वाच्याः। तथा च तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वं, स्पन्देर्वृधधातोश्च फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यवहारो मुख्यः।

सविषयपदार्थाभिधायिजानातीत्यादीनां तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वम्। घटं जानातीत्यादौ द्वितीयातो विषयित्वोपस्थितौ घटविषयिताश्रयज्ञानाश्रयतावान् इत्यन्वयबोधात्। अत एव न यतधातोः सकर्मकत्वं तदुपस्थापिते यत्ने नामार्थस्यो-द्देश्यत्वेनैवान्वयबोधात्। अभुञ्जानेऽपि भोजनाय यतत इति प्रयोगात्। अत एव तादृशधातुयोगे कर्मप्रत्ययाभावाद् भोजनं यतत इति न प्रयोगः।

अत्र भूमिं प्रयाति तरुं त्यजति खग इत्यादौ धात्वर्थतावच्छेदक-संयोगविभागरूपफलशालित्वेऽपि स्वस्य, स्वं प्रयाति त्यजतीत्यप्रयोगात् धात्वर्थे परसमवेतमपि विशेषणं देयम्। न चैवमुभयकर्मजसंयोगस्थले मल्लो मल्लं गच्छतीतिवत्स्वात्मानं गच्छतीति प्रयोगः स्यात्। भूमिं प्रयातीत्यादितो हि द्वितीयादिना परत्वं प्रकृत्यर्थाप्रेक्षिकं बोध्यते। तथा च भूमिभिन्नसमवेत-

भूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमानित्यन्वयबोधः। स्वात्मानं गच्छतीत्यादौ तु स्वात्मभिन्नसमवेतं स्वात्मवृत्तिसंयोगजनकं यन्मल्लान्तरवृत्तिगमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव नातिप्रसङ्गः। अत्र प्रकृत्यर्थस्यान्वयिता-वच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन न परत्वेऽन्वयः। पृथिवीं प्रयाति विहग इत्यादौ विहगस्य पृथिवीत्वावच्छिन्नभिन्नत्वाभावादनन्वयापत्तेः। प्रतियोगितामात्रेणान्वये स्वात्मनोऽपि स्वप्रतियोगिकद्वित्वावच्छिन्नभिन्नत्वात्तथैव दोषात्। अतो द्वितीयाद्यर्थफले यव्द्यक्तेरन्वयः तव्द्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वसंबन्धेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयः। पृथिवीं प्रयातीत्यादौ यत्पृथिवीवृत्तिसंयोगजनकत्वं प्रयाणस्य शाब्दधीविषयः तव्द्यक्तिभिन्नत्वं विहगे वर्तत इति न कोऽपि दोषः।

अन्ये तु पृथिवीं प्रयातीत्यादौ भूखण्डस्यैव पृथिवीपदार्थत्वात्, न तु वृक्षविहगसाधारणपृथिवीत्वजात्यवच्छिन्नस्य, तथा चान्वयितावच्छेद-कावछिन्नप्रतियोगिताकत्वस्य व्युत्पत्तावपि न क्षतिः। एवमन्यत्रापि कर्मवाचकसामान्यपदे लक्षणया विशेषपरत्वं सूपपन्नमित्याहुः।

यत्तु तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्मत्वं द्वितीयादेरपि तत्क्रियानधिकरणत्वमर्थ इति तन्न, क्रियाव्यक्तिभेदा-दनन्तशक्तिकल्पनापत्तेः।

वस्तुतस्तु अन्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीया देरर्थः। तथा च द्वितीयाद्यर्थफले पदार्थैकदेशे अन्योन्याभावे च एकव्यक्तेरेव प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्चाधिकरणत्वेनान्वयः। एवं च भूमिं प्रयातीत्यादौ भूमिवृत्तिसंयोगजनकभूमिवृत्त्यन्योन्याभाव-प्रतियोगितावच्छेदक-प्रयाणानुकूलकृतिमानित्यन्वयधीः। स्वात्मक्रियाया स्ववृत्त्यन्योन्याभावप्रतियोगितान्ावच्छेदकत्वात् स्वात्मानं प्रयातीत्यादेर्न प्रसङ्गः।

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपूर्वकपरस्वत्वो-त्पत्त्यवच्छिन्नत्यागो यजतेश्च देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागः जुहोतेश्च तादृशत्यागफलकाग्निप्रक्षेपः। अत एव ऋत्विजां तादृशत्यागाभावेऽपि होतृत्वम्। अग्निप्रक्षेपश्चाग्निसंयोगानुकूलक्रियानुकूलघृता-दिवृत्तिनादेनादिव्यापारः। न चैवमग्नौ जुहुयादित्यत्राग्निाृत्त्यग्निसंयोगानुकूल-क्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः इत्यादिशाब्दबोधे पुनरुक्तिनिबन्धनोऽनन्वयः, धात्वर्थतावच्छेदकसंयोग-

रूपफलशालित्वेनाग्नेरपि कर्मत्वापत्तिश्चेति वाच्यम्। तत्र संयोगावच्छिन्नक्रियानुकूलव्यापारस्यैव धात्वर्थतावच्छेदकतया आद्यदोषस्याभावात्। तत्र क्रियाया एव धात्वर्थतावच्छेदकतया संयोगस्यावच्छेदकतावच्छेदकतया तदन्वयिनोऽप्यग्नेः कर्मत्वासंभवेन द्वितीयदोषस्याप्यभावात्।

द्वितीयाद्यर्थश्च वृत्तित्वं तच्च धात्वर्थतावच्छेदके फलेऽन्वेति। एवं च विप्राय गां ददाति विष्णुं यजते घृतं जुहोति इत्यादौ विप्रोद्देश्यकगावृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वफलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यकस्वस्वत्वध्वंसफलकत्यागानुकूलकृतिमान्, घृतवृत्त्यग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलकृतिमान् इत्यादि क्रमेणान्वयधीः। अत्र देवताया स्वत्वस्वीकारे तत्र द्वितीयार्थवृत्तिर्विान्वयेनैव विष्णोः कर्मत्वम्। इतरथा दृ उद्देश्यतासंबन्धेन तादृशस्वत्वध्वंसरूप-धात्वर्थताव-च्छेदकफलवत्त्वात् कर्मत्वम् अत एव मन्त्रकरणकहविस्त्याग-भागित्वेनोद्देश्यत्वं देवतात्वमिति मणिकृतः। घृतं जुहोतीत्यत्र धात्वर्थतावच्छेदकीभूताग्निसंयोगानुकूलक्रियावत्त्वात् कर्मत्वम्

मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकत्यागो विक्रयः मूल्यप्रदानपुरः सरं स्वस्वत्वोत्पादकस्वीकारः क्रयः, दत्तद्रव्य-स्वत्वजनकस्वीकार प्रतिग्रहः। तथा च गां विक्रीणीते क्रीणाति प्रतिगृह्णाति वेत्यादं गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमान् गोवृत्तिमूल्यदानप्रयुक्तस्वत्वावच्छिन्नस्वीकारवा गोवृत्तिदान-प्रयुक्तस्वत्वजनकस्वीकारवानिति क्रमादन्वयधीः। सर्वः धात्वर्थतावच्छेदक-तत्तत्फलाश्रयत्वेन गवादेः कर्मत्वम्। एवमनयैव दिश सर्वत्र कर्मत्वमूह्यम्।

न चैवमपि पतेरधःसंयोगावच्छिन्नस्पन्दात्मकतया तदवच्छेदकीभूताधःसंयोगवत्त्वात् भूतलादेः कर्मत्वे वृक्षात्पर्णं भूतलं पततीति प्रयोगः स्यादिति वाच्यम्। तथा विवक्षायामिष्टत्वात्। अत एव द्वितीयाश्रितातीतपतितेत्यादिसूत्रे पतितशब्दयोगे द्वितीयान्तसमासविधानं, तदुदाहरणं च नरकं पतितो नरकपतित इत्यादि साधु संगच्छते। क्वचित् सप्तम्यपि साधुः भूतले पतीति, ग्रामे गच्छतीतिवत्।

अन्ये तु तादृशफलशालित्वेऽपि भूतलादेर्न द्वितीया, फलस्य हि संबन्ध्याकाङ्क्षायां भूतलादेरन्वयो वाच्यः, प्रकृते चाधःसंयोगरूप-

फलस्याधोवृत्तितयोपस्थितेराश्रयान्तरनिराकाङ्क्षत्वात्।-

यद्वा पतिधातोरकर्मकत्वं कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वात्। यथा ग्रामं गच्छतीत्यादौ गम्यादेः। पतिर्हि पर्णगतमधःसंयोगमेव बोधयति न तु भूतलगतं भूतलस्याधः संयोगाभावात्। पर्णस्याधो भूतलमित्येव प्रतीतेः। अत एव भूतले पततीत्येव प्रयोगः न तु भूतलं पततीत्याहुः।

प्राञ्चस्तु ग्रामं गच्छति त्यजति, गम्यते त्यज्यते वा ग्राम इत्यादौ संयोगविभागयोः फलयोः द्वितीया-कर्माख्याताभ्यां प्रत्यायनात् अनन्यलभ्यस्पन्दाद्यात्मकव्यापार एव तत्र धात्वर्थः। न चैवं तत्तद्धातुयोगे द्वितीयादेः संयोगत्वादिना फलविशेषबोधकत्वोपगमेन ग्रामं गच्छति त्यजति इत्यादौ ग्रामवृत्तिसंयोगजनस्पन्दस्य ग्रामवृत्तिविभागजनकस्पन्दस्य च लाभात्पर्यायत्ववारणेऽपि गच्छति त्यजति गमनं त्याग इत्यनयोः पर्यायता स्यादिति वाच्यम्। संयोगावच्छिन्नस्पन्दशाब्दत्वस्य गमेर्विभागा-वच्छिन्नस्पन्दशाब्दत्वस्य त्यजेः कार्यतावच्छेदकत्वात्। एवं च यथायथं संयोगविभागावच्छिन्नस्पन्दलक्षणां विना त्यजति गच्छतीत्यनयोर-बोधकत्वमेव।

संयोगावच्छिन्नस्पन्दशाब्दत्वं च जन्यजनकभावसंबन्धेन संयोगस्पन्दोभयवैशिष्ट्यावगगाहिशाब्दत्वम्। तेन त्यज्यते गम्यते ग्राम इत्यादौ स्पन्दविशेषणककर्माख्यातार्थख्यातार्थसंयोगादिविशेष्यकशाब्दस्य संग्रहः। भावाख्यातस्थलेऽपि गमनमित्यादाविव संयोगाद्यवच्छिन्नस्पन्दे धातोर्लक्षणैव। न चैवं लक्षणया अपि गमित्यजिभ्यां त्यागगमनयोरबोधप्रसङ्ग इति वाच्यम्। शक्तिलक्षणान्यतरसंबन्धेन संयोगाद्यवच्छिन्नसपन्दबोध-कत्वानुपपत्तेर्निर्णयानन्तरमेव गम्यादिना विभागाद्यवच्छिन्नस्पन्दबोधनात्। एवं च-

**परसमवेततत्तद्धात्वर्थान्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्।**

अत एव गम्धातोः पूर्वदेशे न कर्मत्वं तस्य विभागरूप-फलेनानन्वयात्। एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्या विजातीयक्रियैव अर्थः। तस्याश्चाधःसंयोगरूपफलेनान्वयः। एवं ददात्यादेरपि व्यापारमात्रार्थत्वे द्वितीयादीनां (?दिना) तत्तत्फलविशेषान्वयो बोध्य इत्याहुः।

कर्म च त्रिविधं- प्राप्यं, विकार्यं, निर्वर्त्यं चेति।

संयोगादिफलशालि प्राप्यं, यथा ग्रामं गच्छतीत्यादौ ग्रामादिः। क्रिया यद्ध (?त्क)र्मनाशकं फलं जनयति तद्विकार्यं, काण्डं लुनाति इत्यत्र काण्डपदेन लक्षणयावयवा उच्यन्ते। लुनातिना चारम्भकसंयोगविरोधिविभागहेतुः कुठारादिव्यापारः। तथा च काण्डावयववृत्तिता-दृशविभागावच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयधीः। एवं च प्राप्यविकार्ययोः कारकत्वात्तादृशफलाश्रयत्वाच्च मुख्यकर्मत्वम्।

निर्वर्त्यं च निष्पाद्यं, यथा कटं घटं वा करोतीति। अत्र च कृञ्धातोः फलावच्छिनन्व्यापाराबोधकत्वात् कटादेस्तादृशफलानाश्रयत्वेन गौणं कर्मत्वम्। तच्च साध्यत्वेन विषयत्वम्। अत एव वीरणादेरुपादानत्वेन विषयत्वेऽपि वीरणं करोतीति न प्रयोगः।

प्राञ्चस्तु कटादेर्गौणकर्मत्वेऽपि कारकत्वोपपत्त्यर्थमवयवे लक्षणा कटस्यासिद्धत्वेनाकारकत्वात्। न चैवं कदाचित् वीरणं करोतीति मुख्यप्रयोगः स्यादिति वाच्यम्। करोतिपदसमभिव्याहारे कर्मवाचकपदस्यावयवे निरूढलक्षणानियमादित्याहुः।

ओदनं पचतीत्यादौ ओदनपदस्य तण्डुले तदवयवे वा लक्षणा। धातुना च रूपादिपरावृत्तिफलाकाधःसंतापनादि। तथा च तत्तद्धात्वर्थ-तावच्छेदकरूपादिपरावृत्तिशालित्वात् कर्मत्वं, अत्र च पूर्वरूपविरोधेन रूपान्तरापत्तिर्यदि विकारस्तदा विकार्यमध्ये अन्यथा तु प्राप्यमध्ये अस्यान्तर्भावः।

स्तोकं पचतीत्यादौ क्रियाविशेषणे द्वितीया, विशेषणविभक्तिवत् प्रयोगः साधुः। धात्वर्थे स्तोकस्याभेदः संसर्गः। नामार्थधात्वर्थ-योर्भेदान्वयबोध एव प्रकारीभूतविभक्तार्थोपस्थितेस्तन्त्रत्वात्। नीलं घटमित्यादौ विशेषण-विभक्तेरभेदार्थकत्वे तु अस्या अपि अभेदार्थकत्वमिति।।

## कर्मत्ववादः

अथ किं कर्मत्वं? न करणव्यापार्यत्वम्। तद्धि करणजन्यव्यापारवत्त्वं दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्ये दात्रादावतिव्याप्तम्। नापि परसमवेतक्रियाजन्यफलशालित्वम् गमिपत्योः कर्मत्वस्य पूर्वस्मिन्देशे, त्यजेश्चोत्तरस्मिन्देशे, स्पन्देः पूर्वपरयोः प्रसङ्गात्। नदी वर्धत इत्यादौ वृद्धेरवयवोपचयरूपायाः परंपरया फलस्य तीरप्राप्तिरूपस्याश्रये तीरे कर्मत्वापत्तेश्चेति चेत्, अत्र वदन्ति-

**धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्।**

तादृशं च फलं गमेः संयोगस्त्यजेर्विभागः पतेरधः संयोगस्तदवच्छिन्ने स्पन्दे तेषां शक्तेः, स्पन्दमात्रे तेषां शक्तौ पर्यायतापत्तेः, स्पन्देर्वृद्धधातोश्च न फलावच्छिन्नव्यापारे शक्तिरिति न कोऽपि दोषः। फलावच्छिन्नव्यापारबोधकत्वादेव च धातूनां सकर्मकत्वव्यवहारो मुख्यः। जनातीत्यादीनां तु नामार्थान्वितोद्देश्यत्वातिरिक्तविषय-त्वरूपविभक्त्यर्थान्वय्यर्थकत्वं गौणं सकर्मकत्वम्। घटं जनातीत्यादितो घटविषयिताशालिज्ञानाश्रयत्ववानिति बोधात्। तादृशधातुयोग एव च कर्मप्रत्ययः। अत एवाभुजानेऽपि भोजनाय यतते इति प्रयोगात् यतधात्वर्थे नामार्थान्वितस्य चतुर्थ्यर्थोद्देश्यत्वस्यैवान्वयात् न यतेः सकर्मकत्वं, न वा भोजनं यतते इति प्रयोगः।

'भूमिं प्रयाति विहगो विजहाति महीरुहं नतु स्वात्मानम्' इतिप्रयोगात् स्वस्य धात्वर्थतावच्छेदकसंयोगविभागरूपफलशालित्वेपि कर्मत्वाभावात् परसमवेतक्रियाजन्यत्वमपि धात्वर्थतावच्छेदकफले निवेश्यम्। न चैवमपि मल्लो मल्लं गच्छतीत्यादौ उभयकर्मसंयोगरूपफलस्य तादृशत्वात्स्वकर्तृक-क्रियाकर्मत्वरूपव्यवहारः स्वस्मिन् स्यादिति वाच्यम्। परसमवेमयत्क्रिया-जन्यतादृशफलशालित्वं यत्र तत्र तत्क्रियाकर्मत्वस्य स्वीकारात्। इत्थं च द्वितीयादेः क्रियान्वयि परसमवेतत्वमप्यर्थः। परत्वं स्वप्रकृत्यर्थापेक्षया सुपा, स्वार्थफलान्वय्यपेक्षया कर्माख्यातेन च बोध्यते। तथा च भूमिं प्रयातीत्यतो भूमिभिन्नसवेत- भूमिवृत्तिसंयोगजनक- स्पन्दानुकूलकृतिमानित्यन्वयबोधः। भूमिर्गम्यत् इत्यादौ कर्माख्यातस्थले फलं परसमवेतत्वं चाख्यातार्थः। भूमिपदार्थस्य परत्वे विशेषणत्वेन, फलं प्रति विशेष्यत्वेन चान्वयः। तथा च स्वभिन्नसमवेतं स्ववृत्तिसंयोगजनकं यन्मल्लान्तरवृत्तिगमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव न मल्लः स्वं गच्छतीति प्रयोगः।

नन्वत्र परत्वेस्वप्रकृत्याद्यर्थस्यान्वयितावच्छेद-कावच्छिन्न-प्रतियोगिताकत्वेन प्रतियोगितामात्रेण वान्वयः। नाद्यः, पृथ्वीं प्रयाति खग इत्यादौ अनन्वयापत्तेः। खगस्य पृथ्वीत्वावच्छिन्नभिन्नत्वाभावात्। न द्वितीयः, स्वात्मन्यापि स्वघटोभयभेदस्य सत्त्वात् स्वं प्रयातीत्यापत्तेरिति चेन्न, द्वितीयाद्यर्थफले यव्द्यक्तेरन्वयस्तव्द्यक्तित्वावच्छिन्नप्रतियोगिता-कत्वसंबन्धेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयात्। इत्थं च पृथ्वीं प्रयातीत्यादौ

यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकत्वं प्रयाणस्य तद्व्यक्तिभिन्नत्वं विहगेस्तीति न दोषः।

परे तु पृथिवीं प्रयातीत्यादौ पृथिवीपदं कर्मीभूततत्तत्पृथिवीव्यक्तिपरमेव-मन्यत्र कर्मवाचकं सामान्यपदं लक्षणया विशेषपरम्। इत्थं चान्वयि-तावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तेर्न भङ्ग इत्याहुः।

यत्तु परसमवेतत्वं नार्थः किंतु अन्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयार्थः। तथा च भूमिवृत्तिसंयोगजनक- भूमिनिष्ठान्योन्या-भावप्रतियोगितावच्छेदक- प्रयाणानुकूलकृतिमानित्यर्थः। स्ववृत्तिक्रियायाः स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वान्न स्वं प्रयातीति प्रयोग इति। तन्न, एवमपि येन मल्लेन मल्लातरं न गतं सोऽपि मल्लो मल्लं गच्छतीति प्रयोगापत्तेः। मल्लान्तरनिष्ठभेदप्रतियोगिता-वच्छेदिकायास्तन्मल्लवृत्तिक्रि-यायास्तन्मल्लवृत्तिभूमिसंयोगजनकत्वात्। यन्मल्लव्यक्तेः फलान्वयस्तस्या एवान्योन्याभावेऽन्वयोक्तौ (दोषवारणे तु) तद्व्यक्तित्वादेः प्रकारत्वे (शक्तयानन्त्यम्। कथंचित्) कर्मवाचकपदस्य तद्व्यक्तित्वावच्छिन्नलक्षणा-स्वीकारे युगपद्वृत्तिद्वयविरोधप्रसङ्ग।

ननु नान्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयार्थः न वा परसमवेतत्वम्, कर्मवाचकपदार्थतावच्छेदकावच्छिन्नान्वितद्वितीयार्थ-समवेतत्वत्वरूपसामान्यधर्मावच्छिन्नतत्तत्कर्मसमवेततत्वनिष्ठप्रतियोगिताका-भावात्मक- स्वप्रतियोगिकाभाव- संबन्धेन कर्मवाचकपदार्थान्वितद्वितीया-र्थसमवेतत्वस्य धात्वर्थक्रियायामन्वयस्वीकारात्। सामान्यरूपेण विशेषा-भावानभ्युपगमेऽपि यद्व्यक्तेर्द्वितीयार्थसमवेतत्वेऽन्वयस्तद्व्यक्तिसमवेतत्वत्वा-वच्छिन्नप्रतियोगिताकाभावात्मकस्वप्रतियोगिकाभावसंबन्धेन कर्मवाचक-पदार्थान्वितद्वितीयार्थसमवेतत्वस्य धात्वर्थक्रियायामन्वयस्वीकारादेव न विहगः स्वं प्रयातीति प्रयोगः। ईदृशसंबन्धेनान्वयबोधस्य क्वाप्यदृष्टचरत्वेऽपि प्रकृते गत्यन्तरविरहेण स्वीकारात्। अत एव च न कर्मवाचकपदस्य तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिबोधकतया सामान्यरूपेण बोधकतया च युगपद्वृत्तिद्वयविरोध इति चेन्न, नव्यनये क्रियाया अव्याप्यवृत्तितया तन्निष्ठतदाश्रय-द्रव्यसमवेतत्वस्यापि अव्याप्यवृत्तित्वात्, मल्लः स्वं गच्छतीति प्रयोगप्रसङ्गस्य दुर्वारत्वापत्तेः। एतेन तत्तत्क्रियानधिकरणत्वे सति तत्तत्क्रियावच्छेदकफलशालित्वं

तत्तत्क्रियाकर्मत्वं द्वितीयादेरपि तत्तत्क्रियानधिकरणत्वमर्थ इत्यपास्तम्। शक्तयानन्त्यापत्तेश्च।

यत्तु क्रियान्वयि परसमवेतत्वमपेक्ष्य कर्त्रन्वयि परत्वमेव लाघवात्कर्म-प्रत्ययार्थ इति। तन्न, द्वितीयार्थफलपरसमवेतत्वयोरेकान्वयित्वे लाघवात्, ग्रामो गमेः कर्म न तु चैत्र इत्यादौ फलपरसमवेतक्रियाजन्यत्वघटितस्यैव कर्मपदार्थतया तस्यैव कर्मप्रत्ययार्थत्वात्, गम्यते ग्रामः स्वयमेवेत्यादौ परत्वान्वयिविरहाच्चेति दिक्।

अथैवमपि पतेरधः संयोगावच्छिन्नस्पन्दार्थकतया धात्वर्थता-वच्छेदकफलशालिनो भूतलादेः कर्मत्वे वृक्षात्पर्णं भूतलं पततीति प्रयोगः स्यादिति चेत्, तथा विवक्षायां भवत्येव। अत एव 'द्वितीया श्रिता' इति सूत्रे पतितशब्दयोगे द्वितीयासमासविधानं तदुदाहरणं च नरकं पतितो नरकपतित इति साधु संगच्छते। क्वचित्सप्तम्यपि साधुः। यथा भूमौ पतति, ग्रामे गच्छतीत्यादौ।

परे तु भूतलादेः कर्मत्वेऽपि न द्वितीया। यत्र फलस्य संबन्ध्याकाङ्क्षा तत्रैव तत्स्वीकारात्। अत्र तु फलस्याधोदेशवृत्तितया उपस्थितेर्न संबन्ध्याकाङ्क्षा। यद्वा कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वं गम्यादेः, न तु पततेः। अधः संयोगरूपफलस्य पर्णान्वितत्वात्। अध इत्यस्य संबन्धिसाकाङ्क्षतया संबन्धित्वेन पर्णस्यैवान्वयात्। भूतलं हि पर्णस्याधः न तु भूतलस्येति न भूतलं पततीति प्रयोग इति। अथ कथं वृक्षात्पर्णमधः पतति इति प्रयोग इति चेत्, भ्रमात् अत्यधोविवक्षया वा। गतं तिरश्चीनमनूरुसारथेः इत्यत्र व्यक्तिविशेषस्याधो धाम पततीत्यर्थात् न दोष इत्याहुः।

यत्तु त्यजिगम्यादेः स्पन्दाद्यात्मकव्यापारमात्रे शक्तिः, फलस्य द्वितीयादिलभ्यत्वात्। अत एव ग्रामं त्यजति गच्छतीत्यनयोर्नैकार्थता त्यजिगम्योर्योगे द्वितीयादिना विभागसंयोगयोर्बोधनात्। त्यजेर्विभागावच्छिन्न-स्पन्दशाब्दत्वस्य, गमेः संयोगावच्छिन्नस्पन्दशाब्दत्वस्य कार्यताव-च्छेदकत्वात्। अत एव गमनं त्याग इत्यनयोरपि नैकार्थता। उक्तकार्य-कारणभावानुरोधेनात्रापि त्यजिगम्योर्विभागसंयोगावच्छिन्नस्पन्दे लक्षणाङ्गीकारात्। विभागाद्यवच्छिन्न-स्पन्दशाब्दत्वं च विभागादिस्पन्दोभय-वैशिष्ट्यावगाहिशाब्दत्वम्। तेन चैत्रेण ग्रामस्त्यज्यते इत्यादि-वाक्यजन्यस्पन्दविविशेषणकविभागादि-

विशेष्यकशाब्दबोधसंग्रहः। इत्थंच परसमवेततत्तद्धात्वर्थान्वितफल-विशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्। तेन त्यजादेर्नोत्तरदेशादौ कर्मत्वमिति। तन्न, विभागाद्यवच्छिन्नस्पन्दशाब्दत्वस्य जन्यतावच्छेदकत्वे तादृशस्पन्दे शक्तेर्दुर्वारत्वात्। परेषामितरान्विते शक्तिग्रहे इतरांशवद्विभागाद्यंशस्य त्यागस्तु न युक्तः, त्यागगमनयोरेकार्थतावारणाय तत्फलविशिष्टस्पन्दे शक्तिसिद्धेः, विनापि तल्लक्षणाप्रतिसंधानं तथा प्रतीतेरिति दिक्।

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागः, यजतेर्देवतोद्देश्यकस्वसवत्वध्वंसफलकत्यागः, जुहोतेस्ता-दृशाग्निप्रक्षेपपश्चार्थः। अत एव ऋत्विजां तादृशत्यागाभावेऽपि होतृत्वम्। अग्निप्रक्षेपश्च अग्निसंयोगानुकूल-क्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः। न चैवमग्नौ जुहोतीत्यादौ सप्तम्यर्थ-स्याग्निसंयोगेऽन्वये निराकाङ्क्षतापत्तिरिति वाच्यम्। तत्र संयोगानुकूल-क्रियानुकूलव्यापारस्यैव धात्वर्थत्वात्। न च तथाप्यग्नेः कर्म-त्वापत्तिः। संयोगस्य धात्वर्थतावच्छेदकतावच्छेदकतया तद्वतोऽग्नेः कर्मत्वाभावात्। क्रियाया एव धात्वर्थतावच्छेदकतया तच्छालिनो घृतस्यैव कर्मत्वात्। द्वितीयार्थश्च वृत्तित्वं, तच्च धात्वर्थतावच्छेदकेऽन्वेति।

इत्थं च विप्राय गां ददाति, विष्णुं यजते, घंतृ जुहोतीत्यादौ मूल्यग्रहणं विना विप्रोद्देश्यकगोवृत्तिस्वस्वत्व-ध्संपरस्वत्व-फलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यक-स्वस्वत्व-ध्वंसफलकत्यागानुकूलकृतिमान्, घृतवृत्त्यग्निसंयोगा-वच्छिन्न-क्रियानुकूल-व्यापारनुकूलकृतिमानित्यन्वयबोधः। विष्णोरुद्देश्यत्व-संबन्धेन स्वस्वत्वध्वंसफलवत्त्वात्कर्मत्वम्।

एवं मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वजनकस्त्यागो विक्रयः। मूल्य-दानप्रयुक्तस्वस्वत्वोत्पादकस्वीकारः क्रयः। दत्तद्रव्यस्य स्वस्वत्वजनकस्वी-कारः प्रतिग्रहः। तथा च गां विक्रीणाति क्रीणति प्रतिगृह्णातीत्यादौ गोवृत्ति-मूल्यग्रहणप्रयुक्तस्वस्वत्व-ध्वंसपरस्वत्वजनकत्यागानुकूलकृतिमान्, गोवृत्ति-मूल्यदानप्रयुक्तस्वस्व-त्वानुकूलस्वीकारानुकूलकृतिमान्, गोवृत्तिदत्तद्रव्य-स्वस्वत्वजनकस्वीकारवानिति क्रमेणान्वयधीरिति संप्रदायः।

इदमत्रावधेयम्। दानस्य परस्वत्वजनकत्वे तत एव विक्रयवारणे मूल्यग्रहणं विनेति व्यर्थम्। अथ-प्रतिग्रह एव स्वीकारविशेषतया स्वत्वहेतुः। अस्वामिके स्वीकारस्य स्वत्वहेतुत्वकल्पनात्। अत एव 'याजनाध्यापन-प्रतिग्रहैर्ब्राह्मणो

धनमर्जयेत्' इत्यादिकं साधु संगच्छते। अन्यथा प्रतिग्रहवैफल्यापत्तेः। दानं तु स्वस्वत्वध्वंसमात्रं जनयत्परस्वत्व-प्रयोजकमिति-मतम्। तथापि पूर्वोक्तलक्षणमसम्यक् तदुपादानेऽप्युपेक्षायामतिव्याप्तेः। तस्या अपि स्वस्वत्वध्वंसद्वारा परस्वत्वप्रयोजकत्वात्। तद्वारणाय त्यागे वैजात्योपादानस्यावश्यकत्वात्।

वस्तुतो दूरस्थपात्रमुद्दिश्य त्यक्तद्रव्यस्य प्रतिग्रहात्प्रागस्वामिकस्यानुद्देश्येन पुरुषेण प्रतिग्रहात्स्वत्वं स्यात्। अन्योद्देश्यकत्यागादेः प्रतिबन्धकत्वे तु गौरवम्। न च तादृशत्यागो दानाभास एव ससंप्रदानकोहि त्यागो दानं, संप्रदानं च ददस्वेत्यनुमतिप्रकाशनद्वारा दानक्रियाहेतुत्वेन, न च असन्निहितस्य तत्त्वमिति, न ततो दातुः स्वत्वनाश इति वाच्यम्।

**तीर्थे संकल्पितं द्रव्यं यदन्यत्र प्रदीयते।**
**दाता तीर्थफलं भुङ्क्ते प्रतिग्राही न दोषभाक् ।।**
**मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत्।**
**विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते।।**

इत्यादिवाक्यात्तादृशस्य दानत्वसिद्धेः। तस्माद्दानमेव परस्वत्वजनकम्। प्रतिग्रहप्रागभावस्यापेक्षणीयत्वान्न प्रतिग्रहवैफल्यम्। अत एव यस्मै दत्तं तस्य प्रतिग्रहेण दातुः स्वत्वनिवृत्तिः।

अस्तु वा दत्तद्रव्यस्वीकारत्वरूपप्रतिग्रहत्वेन स्वीकर्तव्यद्रव्यदानत्वेन वेति विनिगमकाभावात् दानं स्वस्वत्वध्वंसद्वारा परस्वत्वजनकं प्रतिग्रहश्च स्वस्वत्वजनकः। उभयथापि मूल्यग्रहणं व्यर्थम् विक्रयस्य परस्वत्वजनकत्वे मानाभावात्। न च विक्रीतद्रव्यस्वीकारत्वं क्रयत्वमित्यत्रापि विनिगमनाविरहः।

मूल्यदानपूर्वकस्वीकारस्यैव क्रयत्वात् विक्रयत्वात् विक्रयत्वस्य गौरवेणानिवेशात्। किंच स्वस्वध्वंसजनकेत्यपि व्यर्थम्, अव्यावर्तकत्वात्। अपि चाग्निप्रक्षेपो होम इत्यप्ययुक्तम्, 'देवतोद्देश्यकस्वस्वत्व-ध्वंसफलकत्यागो यागः स एव प्रक्षेपावच्छिन्नो होमः' इति विवेकोक्तेश्च। अस्तु च ऋत्विजा त्यागाद्यजमानस्वत्वध्वंसः, अनुमतदासत्यागाद्वि-देशस्थस्वामिस्वत्वध्वंसवत्।

वस्तुतस्तु दानत्वयागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषाः। न च श्राद्धस्य पित्रपेक्षया यागत्वं, ब्राह्मणापेक्षया दानत्वमिति विवेकोक्तेस्तयोः सांकर्यान्न जातित्वमिति वाच्यं, श्राद्धस्य गौणतदुभयरूपत्वात्। वस्तुतः श्राद्धस्य

यागत्वमेव, उद्देश्यपित्रादिस्वत्वाजनकत्वात्। ब्राह्मणस्य स्वत्वमपि न सार्वत्रिकम्, ब्राह्मणाभावेऽपि श्राद्धोक्तेः। 'पिण्डांस्तु गोजविप्रेभ्यः' इत्यादिनान्यत्रापि तत्प्रतिपत्तेः।

विष्णुं यजते इत्यादौ द्वितीयार्थोऽप्युद्देश्यत्वम्। तत्त्वं च तस्येदमित्यारोपज्ञानविषयत्वम्। देवतायाः स्वत्वोपगमे तु यागत्वं दानत्वव्याप्यं, होमत्वं यागत्वव्याप्यमिति सिद्धम्। देवपूजादिकमपि याग एवेति कृतमप्रकृतेन।

अत एव संसृष्टिस्थलेऽसाधारणस्वत्वनाशोत्तरं साधारणस्वत्वोत्पादात् तत्रसकलविशेषणसहितदानलक्षणातिव्यातिव्याप्तिरित्यपास्तम्, दानत्वजातेस्तत्राभावात्। परमात्रस्वत्वानुकूलत्वविशेषणात् संसृष्टिनिरास इत्यन्ये। तत्र न स्वत्वनाशः किंतु परस्वत्वोत्पत्तिमात्रम्। स्वत्वति स्वत्वोत्पत्तिस्त-त्रेच्छाया उत्तेजकत्वात्। स्वस्वत्वध्वंसपूर्वकत्वविशेषणादेव तन्निरास इत्यन्ये। परे त्वदृष्टविशेजनकत्वविशेषणात्तव्द्यावृत्तिरित्यप्याहुः। एतेन विनिमये विक्रयादिलक्षणातिव्याप्तिरित्यपास्तम्। विक्रयत्वादेर्जातित्वात्। मूल्यातिरिक्तद्रव्यग्रहणप्रयुक्तस्वस्वत्वण्वंसपरस्वत्वानुकूलत्यागो विनिमय इत्यन्ये।

मित्र स्वत्वमिति चेत्। अत्र प्राञ्चः - यथेष्टविनियोज्यत्वं स्वत्वम्। तच्च शास्त्रानिषिद्धविनियोगोपायो यः क्रयप्रतिग्रहादिस्तद्विषयत्वम्। तच्च न बहिरिन्द्रियवेद्यम्। प्रतिग्रहादेर्मानसज्ञानविशेषरूपस्य बहिरिन्द्रियायोग्यत्वादित्याहुः।

नव्यास्तु- प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहारद्दानादितः स्वत्वंनश्यति प्रतिग्रहादितश्च स्वत्वमुत्पद्यते इत्यादिप्रत्यय-व्यवहारप्रामाण्यानुरोधात् स्वत्वमतिरिक्त एव पदार्थः। तच्च स्वत्वं दानादितो नश्यति, प्रतिग्रहादितश्च जायते। तच्च बाहिरिन्द्रिययोग्यं, स्वं पश्यामीति प्रतीतेः। तदीययथेष्टविनियोज्यत्वज्ञानस्य तदीयस्वत्वसाक्षात्कारहेतुत्वान्न यथेष्ट विनियोगाद्यज्ञानदशायां स्वत्वसाक्षात्कारापत्तिः।

वस्तुतस्तदीययथेष्टविनियोज्यत्वे तदीयस्वत्वव्यभिचारित्वग्रहदशायां तद्ग्रहेऽपि स्वत्वसाक्षात्कारानुदयात् तदीयस्वत्वसाक्षात्कारं प्रति तदीयस्वत्वव्याप्यतदीययथेष्टविनियोज्यत्ववदिदमित्याकारकज्ञानस्य हेतुत्वं वाच्यम्। तथा च स्वत्वस्यानुमितिरेव न तु साक्षात्कारः। स्वत्वे लौकिकविषयताकल्पने लौकिकंविषयिताशालितत्साक्षात्कारे तादृग्विशेषदर्शनस्य हेतुत्वकल्पने च गौरवात्। स्वं पश्यामीत्यनुव्यवसायस्तु सुरभि चन्दनं

पश्यामीत्यादिवद्विशेषणांशेऽलौकिकविषयत्वावगाही। न चायोग्यत्वकल्पने लौकिकसाक्षात्कारे स्वत्वस्य प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम्, तस्यायोग्यत्वकल्पने लौकिकविषयताविरहादेव तत्रत्यक्ष-वारणसंभवात्। योग्यत्वे तद्गोचरलौकिक-प्रत्यक्षसामग्र्यास्तद्गोचरानुमित्यादौ प्रतिबन्धकत्वकल्पने गौरवादित्या-हुरित्यलमतिविस्तरेण।

'तच्च कर्म त्रिविधम् - प्राप्यं, विकार्यं, निर्वर्त्यं च।

तत्र संयोगादिरूपक्रियाजन्यफलशालि प्राप्यम्। यथा-ग्रामं गच्छती-त्यादौ ग्रामादिः।

यल्लब्धसत्ताकमेवावस्थान्तरमापद्यते तद्विकार्यम्। यथा-काष्ठं भस्म कराति, सुवर्णं कुण्डलं करोतीत्यादौ यथा काष्ठादिः, काष्ठादिपदलक्ष्यस्य काष्ठावयवादेः सत एव भस्मादिसंबन्धरूपावस्थान्तरप्राप्तेः।

यत्तु क्रिया यत्कर्मनाशकं फलं जनयति तद्विकार्यम्। यथा-काष्ठं लुनातीत्यत्र काष्ठमिति तन्न, काष्ठपदलक्ष्यस्य काष्ठावयवस्य कर्मतयाक्रिया-यास्तन्नाशकत्वाभावात्। अत्र हि काष्ठपदस्य काष्ठावयवो लुनातेरारम्भकसंयोग-प्रतिद्वन्द्विविभागहेतुक्रियानुकूलः कुठारादिव्यापारोऽर्थः। तथा च काष्ठावयववृत्त्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनक्रियानुकूल-व्यापारानुकूलकृतिमानित्यन्वयधीरित काष्ठावयवस्य प्राप्यकर्मतैवावस्था-न्तराप्रात्यभावान्न विकार्यता। तण्डुलं पचतीत्यादौ तण्डुलपद-लक्ष्यस्तण्डुलावयवः पच्यर्थो रूपादिपरावृत्त्यवच्छिन्नो विक्लित्त्यवच्छिन्नो वा तेजस्संयोगः। तथाच धात्वर्थजन्य-फलशालित्वात्सतोऽवस्थान्तरप्राप्तेश्च उभयविधकर्मत्वं तण्डुलावयवस्येष्टम्। असंकीर्णस्थानमुक्तमेवेत्यदोषः।

यत्क्रियया निष्पद्यते तन्निर्वर्त्यम्। यथा-घटं कटं वा करोतीत्यादौ घटादि। अत्र कृञः फलावच्छिन्नव्यापारबोधकत्वाभावाद्गौणकर्मत्वम्। तच्च साध्यताख्यकृतिविषयत्वम्। अत एव वीरणं करोतीत्यादिर्न प्रयोगः। वीरणादावुपादानताख्यकृतिविषयताया एव सत्त्वात्।

यत्तु कटादिपदस्य कटाद्यवयवे निरूढलक्षणा। तत्र विना लक्षणां कटादेर्गौणकर्मत्वसंभवेऽपि कारकत्वासंभवात्, निरूढलक्षणाया मुख्यप्रयोगापवादकत्वाच्च न वीरणं करोतीति मुख्यप्रयोग इति। तन्न, घटंजानाति अतीतमित्यादौ घटादेरिव कटादेरपि गौणकारकत्वसंभवात्।

स्तोकं पचतीत्यादौ क्रियाविशेषणपदोत्तरद्वितीया विशेषणविभक्तिवत् प्रयोगसाधुत्वाय नामार्थधात्वर्थयोरभेदान्वयस्वीकारेणाभेदस्य संसर्गत्वात्। तदस्वीकारे तु विशेषणविभक्तिवदस्तु साऽभेदार्थिका। तस्याः कारकत्वाभावस्तु क्रियान्वितकर्तृत्वाद्यन्वितत्वाभावादिति दिक्।।

३ - साक्षाद्धात्वर्थतावच्छेदकनिरुक्तक्रियाद्वयरूपफ-लान्वयिनोरजापयसो-र्मुख्यकर्मत्वम्। तादृशक्रियानुरूप-फलान्वितान्वयिनोर्गोग्रामयोर्गौणकर्मत्वम् उभयत्रापि धात्वर्थान्वित-विभक्त्यर्थान्वितत्वमस्ति। फलद्वयस्यापि धात्वर्थता-वच्छेदकत्वात्। अत एव कर्मद्वयसाकांक्षफलबोधकधातुत्वं द्विकर्मकत्वं सूपपादम्। यत्तु विभागानुकूलक्रिया दुहेरर्थः, संयोगानुकूलक्रिया नयतेरर्थः। न तु तदुभयानुकूलकर्तृव्यापारः कर्मद्वयस्याप्येकत्र फले अन्वय इति। तत्र, प्रयोज्ययोः कर्मत्वानुपपत्तेः- परसमवेतत्वस्य क्रियायामभावात् । कर्मद्वयस्याप्येकत्र अन्वये च गौणमुख्यव्यवहारो न स्यात् । एतेन विभागाद्यनुकूला कर्तृगता चेष्टैव दुहादेरर्थ इत्यपास्तम् , फलद्वयाप्रवेशे गौणमुख्य व्यवहारानुपपत्तेः। यद्यपिः गामित्यस्यार्थो गोवृत्तित्वं पयस्येवान्वेतीति गौणं कर्म न लक्ष्यमिति तदपि न, गौः पयो दुह्यते इत्यादौ गोः कर्मत्वस्य दुरुपपादत्वात्। अजां ग्राममित्यादौ ग्रामवृत्तित्वस्य प्रागजायामसत्त्वेनान्वयायोगात् । काशीतः प्रयागे नीयमानामजां काशीं नयतीति प्रयोगापत्तेश्च। तत्र तत्तत्क्रियानुकूलकृत्रिमत्वं तत्तत्क्रियाकर्तृत्वम्। काष्ठादौ पाकाद्यनुकूलव्यापारवत्त्वप्रतिसंधानेऽपि कर्तृपदाप्रयोगात्, कृताकृतविभागादिना सिद्धयत्नशक्तिकेन कृधातुनातृजंतेन सिद्धस्य कर्तृपदस्य यत्नाश्रयबोधकत्वाच्च।। अचेतनेऽपि कर्तृपदप्रयोगस्तु गौणः। गुरुतरभारोत्तोल-नादिक्रियाविषयकयत्नसत्त्वेऽपि तत्क्रियाया अनिष्पत्तौ तत्क्रियायां कर्तृत्वाव्यवहारात् विषयत्वं विहायानुकूलत्वमूपात्तम् । यदि च मत्तो भूतं न तु मया कृतमिति व्यपदेशान्नान्तरीयककृतिसाध्यस्य पिष्टमध्यस्थशर्कराभोजनस्य न कर्तृत्वं तदा विषयत्वमपि निवेश्यम्। तच्च साध्यत्वेन। तेन यागादिकृतेरुद्देश्यत्वेन स्वर्गादिविषयकत्वेऽपि न यागादिकर्तुः स्वर्गकर्तृत्वम् । अस्मदादिकर्तृक-यागादिकर्तृत्वमीश्वरस्येष्टम्। तथा विवक्षायामीशः पचतीति प्रयोगोऽपीष्ट एव।। न चेत् कार्यत्वा-नवच्छिन्नजन्यतानिरूपितत्वमसाधारणत्वं निवेश्यमिति नैयायिकाः। वैयाकरणास्तु "अनभिहिते कर्तरि" इत्यनुशासनात् -अचेतनेऽपि कर्तृपदप्रयोगात्क्रियाश्रयत्वमेव कर्तृत्वम् । कारककर्मादिपदव

कृधातुरप्यत्र क्रियार्थक एव। आश्रयत्वमिहाख्यातार्थः। तथा च यागाद्यसभिव्याहृताख्यातेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यतेतद्धात्वर्थ-निरूपिततद्धर्मवत्त्वं तद्धात्वर्थकर्तृत्वम्। यथा पचतीत्यादौ पाकानुकूलव्यापारवत्त्वम् , जानातीत्यादौ ज्ञानाश्रयत्वम्, नश्यतीत्यादौ नाशप्रतियोगित्वम् इति चैत्रेण तंडुलः पच्यते इत्यादौ पाकजन्यफलाश्रयत्ववारणाय यागाद्यसमभिव्याहृतेति। अत्र चैत्रादेः कर्तृत्वं तु पचतीत्याद्याख्यातबोध्यधर्ममादायैवेति बोध्यम्। धात्वर्थान्वित-द्वितीयाद्यर्थकर्मत्वकरणत्वमादाख्यातेनेति जाना-तीत्याद्याख्यातार्थ आश्रयत्वम् , न पाककर्तृत्वम् । हतीत्यादौ हिंसाश्रयत्वम् , न गमनकर्तृत्व तत्संपत्तये यत्तदिति धात्वर्थविशेषणम्। यदि च काष्ठं पचति, स्थाली पचतीत्यादिप्रयोगवशात्करणादीनां कर्तृत्वमिष्टम् । तदा पच्यत ओदनः स्वयमेवेत्यादौ कर्मकर्तृकर्मणोऽपि तादिष्टम् ओदनः स्वयं पचतीत्यप्रयोगस्त्वसाधुत्वात्।। कर्माख्यातयागादिर्नेह विभाव्यते। कर्मत्वविशिष्टस्य कर्तृत्वरूपतान्वारणाय तदुपादेयम्। न हि कर्मत्वादेः कर्तृत्वरूपत्वे "अनभिहिते कर्त्तरि" इत्यनुशासनार्थः संगच्छत इत्याहुः। यत्र स्वतंत्रः कर्त्ता' इति पाणिनिसूत्रात्कारकांतराप्रयोज्यत्वे सति कारकांतरप्रयोजकत्वं कर्तृत्वम्। सत्यंतेन पुरुषादिजन्यसंयोगरूप-व्यापारवत्त्वरूपं तत्। प्रयोज्य-त्ववत्कुठारादेर्व्युदासः। तत्र, ईश्वरप्रयोज्यानां जीवानां कर्तृत्वानापत्तेः। दण्डजन्यसंयोगरूप-व्यापारवति कुलालादावव्याप्तिश्चेति दिक्। कर्म करणव्यापारित्वम्। तद्धि करणजन्यव्यापारवत्त्वं दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापारवति दात्रादावतिव्याप्तम् । नापि परसमवेतक्रियाजन्यफलशालित्वम् । गमिपत्योः कर्मत्वस्य पूर्वस्मिन्देशे त्यजेश्चोत्तरस्मिन्देशे स्यंदेः पूर्वपरयोः प्रसंगात्। नदी वर्द्धत इत्यादौ वृद्धेरवयवोपचयरूपायाः परंपरया तीरप्राप्तिरूपयत्नस्याश्रये तीरे कर्मत्वप्राप्तिश्चेत् - अत्र वदन्ति-'धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्' तादृशं फलं गमेः संयोगस्त्यजेर्विभागः पतेरधःसंयोगस्तदवच्छिन्ने स्पन्दे शक्तिः, स्पन्दमात्रे तेषां शक्तौ पर्यायतापत्तेः, स्पन्देर्वृध्धातोश्च न फलावच्छिन्नव्या पारे शक्तिरिति न कोपि दोषः। फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यापारो मुख्यः। ज्ञाधात्वादीनां नामार्थान्वितोद्देश्यत्वाति-रिक्तविषयित्वरूपविभक्त्यर्थान्वय्यर्थकत्वं सकर्मकत्वम्। घटं जानातीत्यादितो घटविषयिता शालिज्ञानाश्रयत्ववानिति बोधः तादृशधातुप्रयोगे एवं च कर्मप्रत्ययः। अत एवाभुंजान एवं भोजना यतते इति प्रयोगात्-यत्धात्वर्थे नामार्थान्वितस्य

चतुर्थ्यर्थोद्देश्यत्वस्यैवान्वयात्-न यतेः सकर्मकत्व न वा भोजनं यतते इति प्रयोगः। "भूमिं प्रयाति विहगो विजहाति महीरुहम्। नतु स्वात्मानम् इति योगात्। स्वस्यधात्वर्थतावच्छेदकसंयोगवि भागरूफलशालित्व-रूपसकर्मकत्वाभावात् ... समवेतक्रियाजन्यत्वमपि धात्वर्थतावच्छेदक फले निवेश्यम्। न चैवमपि मल्लो मल्लं गच्छतीत्या दौ उभयकर्मजसंयोगरूपफलस्य तादृशत्वात्स्व कर्तृकक्रिया-कर्मत्वरूपव्यवहारस्स्वस्मिन्स्यादिति.... वाच्यम्। परसमवेत-क्रियाजन्यतादृशफलशालित् ........ तत्र कर्मत्वस्य स्वीकारात्। इत्थं च द्वितीयादे क्रियान्वयिपदसमवेतत्वमप्यर्थः। परत्वं स्वप्रकृत्य-र्थपेक्षया सुपा स्वार्थफलान्वय्यपेक्षया कर्माख्यातेन च बोधयते। तथा च भूमिर्गम्यत इत्यादौ कर्माख्यातस्थले फलं परसमवेतत्वं चाख्यातार्थः। भूमि पदार्थस्य परत्वे विशेषणत्वेन फलं प्रति विशेष्यत्वे न चान्वयः। तथा च भूमिभिन्नसमवेतक्रियाजन्यफ लशालिनी भूमिरित्यन्वयबोधः। भूमिं प्रयातीत्यतो भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमा-नित्यन्वयबोधः। एवं च स्वभिन्नसमवेतं स्ववृत्तिसंयोगजनकं यन्मल्लान्तरवृत्तिगमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव न मल्लः स्वं गच्छतीति प्रयोगः। नन्वत्र परत्वे स्वप्रकृत्यर्थस्या-न्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन, प्रति योगतामात्रेण वान्वयः। नाद्यः, पृथ्वी प्रयाति विहग इत्यादौ अनन्वयापत्तेः। खगस्य पृथ्वीत्वा......त्वात्। न द्वितीयः, स्वामन्यपि खगपृथ्व्युभयभेद-सत्त्वात् स्वं प्रयातीत्यापत्तेरिति चेन्न, द्वितीया-द्यर्थफले यव्द्यक्तेरन्वयस्त-व्द्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबंधेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयात्। इत्थं च पृथ्वीं प्रया.... तीत्यादौ यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकत्व प्रयाणस्य तव्द्यक्तिभिन्नत्वं विहगेऽस्तीति न दोषः परे तु पृथिवीमित्यादौ पृथिवीपदं कर्मत्ववत्पृथिवी व्यक्तिपरमेवमन्यत्र कर्मवाचकं सामान्यपदलक्षणया विशेष्यपरम्। इत्थं चान्वयितावच्छेदकावच्छिन्नप्रतियोगितायास्तादृग्व्यक्तेर्न भङ्ग इत्य हुः। यत्तु परसमवेतत्वं नार्थः। किंतु अन्योन्या भावप्रतियोगितावच्छेदकत्वं क्रियान्वयिद्वितीयार्थः। तथा च भूमिवृत्तिसंयोगजनकभूमिनिष्ठान्योन्या-भावप्रतियोगितावच्छेदकप्रयाणानुकूला.....नित्यर्थः। स्ववृत्तिक्रियायाः स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वान्न स्वं प्रयातीति प्रयोग इति। तन्न, तथापि येन मल्लेन मल्लांतरं न गतं सोपि मल्लो मल्लं गच्छतीति

प्रयोगापत्तेः। मल्लांतरनिष्ठ-भेदप्रतियोगितावच्छेदिकाया स्तन्मल्लवृतिक्रियायास्त-न्मल्लवृत्तिभूमिसंयोगजन कत्वात्। यन्मल्लव्यक्तेः फलान्वस्तस्याएवान्योन्या-भावेऽन्वयोक्तौ दोषवारणे तु तव्द्यक्तित्वादेः प्रकारत्वे शक्तयानन्त्यम् कथंचित्कर्मवाचकपदस्य तव्द्य क्तित्वाच्छिन्न लक्षणास्वीकारे युगपद्वृत्तिद्वयाविरोधप्रसङ्गः। ननु नान्योन्याभावप्रतियोगितावच्छेदक त्वात् क्रियान्वयिद्वितीयार्थः। नवा परमवेतत्वंसमवेतत्वस्वरूपसामान्यधर्मावच्छिन्नतत्कर्मसमवेतत्व-निष्ठप्रतियोगिताकाभावात्मकस्वप्रतियोगिताकाभावसंबंधेन कर्मावाचकपदार्थान्वितद्वितीयार्थासमवेतत्वस्य क्रियायामन्वयस्वीकारात्। सामान्यरूपेण विशेषाभावानभ्युपगमे यव्द्योक्तेर्दितीयार्थसमवेत-त्वेऽन्वयस्तव्द्यक्तिसमवेतत्वावच्छिन्न-प्रतियोगिताकाभावा-त्मकस्वप्रतियोगिताकाभावसं बंधेनकर्मवाचक-पदान्वितद्वितीया-यार्थासमवेतत्वस्य धात्वर्थक्रियायामन्वयस्वीकारात् । क्वाप्यदृष्टचर त्वेऽपि प्रकृते गत्यंतरविरहेण स्वीकारात् । अत एव न कर्मवाचकपदस्य तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिबोधकतया सामान्यरूपेण बोधकतया च युग पद्वृत्तिद्वयविरोध इति चेन्न, नव्यनये क्रियाया अव्याप्यवृत्ति-तयातान्निष्ठतदाश्रयद्रव्यसमवेतत्वस्या-पिअव्याप्यवृत्तित्वात्-मल्लः स्वं गच्छतीति प्रयोग प्रसंगस्यदुर्वारित्वापत्तिः। एतेन तत्तत्क्रियानधिकरणत्वे सति तत्तत्क्रियावच्छेदकफलशालित्वं तत्तत्क्रियाकर्मत्वं द्वितीयादेरपि तत्तत्क्रियानधिकरण विशेष........ इत्यपास्तम् । शक्त्यानंत्यापत्तेश्च। यत्तु क्रियान्वयि परसमवेतत्वमवेक्ष्य कर्त्रन्वयिपरत्वमेव लाघवात्कर्मप्रत्ययार्थ इति। तन्न, द्वितीयार्थफलपरसमवेतत्वयोरेकान्वयित्वेन लाघवात् । ग्रामो गमेः कर्म न तु चैत्र इत्यादौ परसमवेतक्रियाजन्यत्वघटितस्यैव कर्मपदार्थतया तस्यैव कर्मप्रत्ययार्थत्वात् । गम्यते ग्रामः स्वयमित्यादौ परत्वान्वयिविरहाच्चेति दिक्। अथैवमपि पतेः संयोगावच्छिन्नस्पन्दार्थकतया धात्वर्थतावच्छेदकफलशालिनो भूतलादेः कर्मत्वे वृक्षात्पर्णं भूतलं पततीति प्रयोगः स्यादिति चेत्-तथा विवक्षायां भवत्येव। अत एव "द्वितीयाश्रिता" इति सूत्रे पतितशब्दयोगे द्वितीयासमासविधानम् । तदुदाहरणं च नरकं पतितो नरकपतित इति साधु संगच्छते। क्वचित्सप्तम्यपि साधुः। यथा भूमौ पतति, ग्रामे गच्छतीत्यादौ। परे तु भूतलादेः कर्मत्वेऽपि न द्वितीया। यत्र

फलसंबंध्याकांक्षा तत्रैव तत्स्वीकारात् । अत्र तु फलस्याधोदेशवृत्तितया उपस्थितत्वेन न संबंध्याकांक्षा। तथाहि कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्य धातोः सकर्मकत्..... न तु पततः। अधः संयोगरूपफलस्य पर्णान्वितत्वात् । अध इत्यस्य संबंधिसाकांक्षतया संबंधित्वेन पर्णस्यैवान्वयात् । भूतलं पर्णस्याधः न तु पर्णं भूतलस्येति न भूतलं पतति प्रयोग इति। अथ कथं वृक्षात्पर्णमधः पतति इतिप्रयोग इति चेत् भ्रमादयंविवक्षयावा 'गतंतिरश्चीनमनूरुसारथेः' इत्य त्र व्यक्तिविशेषस्याधो धामपततीत्यर्थात् नदोष इत्याहुः। यत्तुत्यजगम्यादेः स्पन्दाद्यात्मकव्यापारमात्रे शक्तिः, फलस्य द्वितीयादिलभ्यत्वात् । अतएव ग्रामं त्यजतिगच्छतीत्यनयोर्नैकार्थता। त्यजगम्योर्योगे द्वितीयादिना विभागसंयोगयोर्बोधनात्-त्यजेर्विभागा-वच्छिन्नस्पन्दशब्दत्वस्य गमेः संयोगावच्छिन्नस्पन्दशब्दत्वस्य च कार्यतावच्छेदकत्वात् । अत एव गमनं त्याग इत्यनयोरपि नैकार्थता। उक्तकार्यकारणभावानुरोधेनात्रापि त्यजगम्योर्विभाग-संयोगावच्छिन्न-स्पन्दे लक्षणांगीकारात् विभागाद्यवच्छिन्नस्पन्दशाब्दत्वं च विभागादिस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वम् । तेन चैत्रेण ग्रामस्त्यज्यते इत्यादिवाक्यजन्यस्पन्दविशेषण-कविभागादिविशेष्यकशब्दत्वसंग्रहः। इत्थं च परसमवेततद्धात्वर्थान्वितफलविशेषशालित्वं तत्त द्धात्वर्थकर्मत्वम्। तेन त्यजादेर्नात्तरदेशादौ कर्मत्वमिति। तत्र, विभागाद्य-वच्छिन्नस्पन्दशाब्दत्वस्य जन्यतावच्छेदकत्वे तादृशस्पन्दे शक्तेर्दुर्वारत्वात् परेषामितरान्विते शक्तिग्रहे इतरांशवद्विभागाद्यंशस्य त्यागो न युक्तः। त्यागगमनयो रेकार्थतावारणाय तत्फलविशिष्टे स्पन्दे शक्ति प्रसिद्धे विनापि तल्लक्षणानुसंधानं तथा प्रतीतेरिति ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजयागत्यागः, यजतेर्देवतोद्देश्यकस्वस्वत्वध्वंसफल त्यागः, जुहोतेस्तादृशाग्निप्रक्षेपश्चार्थः। अत एव त्विजां तादृशत्यागाभावेपि। होतृत्वम्। अग्निप्रक्षेप अग्निसंयोगानुकूलक्रियानुकूल घृतादिवृत्तिनोदना दिव्यापारः। नचैवमग्नौ जुहोतीत्यादौ सप्तम्यर्थ स्याग्निसंयोगेऽन्व-येनिराकांक्षतेतिवाच्यम्। अत्र योगानुकूलक्रियानुकूल-व्यापारस्यैव धात्वर्थात्। च तथाप्यग्ने कर्मत्वापत्तिः। संयोगस्य धात्वर्थतानवच्छेदकतया तद्वतोऽग्नेः कर्मत्वाभावत् । क्रियाया एव धात्वर्थतावच्छेदकतया तच्छालिन घृतस्यैव कर्मत्वात् । द्वितीयार्थश्च वृत्तित्वं, तद् धात्वर्थतावच्छेदकेऽन्वेति। इत्थं च विप्राय गां ददाति, विष्णुं यजते, घृतं जुहोतीत्यादौ मूल्यग्रहणं विना

विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्व-फलकत्यागानुकूल-कृतिमानित्यन्वर्थबोधः। विष्णोरुद्देश्यत्वसंबंधेन स्वस्वत्वध्वं-सफलवत्त्वात्कर्मत्वम्। विष्णूद्देश्यकस्वस्वत्वध्वं-सफलकत्यागानुकूल-कृतिमानित्यन्वयबोधः। घृतवृत्त्यग्निसंयोगावच्छिन्नाक्रियानुकूल-व्यापारानुकूल-कृतिमानित्यन्वयबोधः। एवं मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसफलकत्यागो विक्रयः। मूल्यदानप्रयुक्तस्वत्वोत्पादकस्वीकारःक्रयः। दत्तद्रव्यस्वस्यस्वत्वजनक स्वीकारः परिग्रहः। तथा च गां विक्रीणाति, गां क्रीणाति गां, प्रतिगृह्णातीत्यादौ गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वं-सफलकत्यागानुकूलकृतिमान्, गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वानुकूल-स्वीकारानुकूलकृतिमानिति क्रमेणान्वयधीरिति संप्रदायः इदमत्राभिधेयम् दानस्य परस्वत्वजनकत्वे तत एव विक्रयवारणे मूल्यग्रहणं विनेति व्यर्थम् । अथ प्रतिग्रह एव स्वीकारावि‌शेषतया स्वत्वहेतुः। अस्वामिके. स्वीकारस्यस्वत्वहेतुत्वाकल्पनात्। अतएव 'याजनाध्यापनप्रति-ग्रहैर्ब्राह्मणो धनमर्जयेत् इत्यादिकं साधु संगच्छते। अन्यथा प्रतिग्रहवैफल्यापत्तेः। दानं तु स्वस्वत्वध्वंसमात्रं जनयत्पर स्वत्वप्रयोजकमिति मतम् । तथापि तद्वैयर्थ्यं तदुपादानेऽप्यु-पेक्षायामतिव्याप्तेः। तस्या अपि स्वस्वत्वध्वंसद्वारा परस्वत्वप्रयोजकत्वात्। तद्वारणाय वैजात्योपादानस्यावश्यकत्वात् । वस्तुतो दूरस्थपात्रमुद्दिश्य त्यक्तद्रव्यस्य प्रतिग्रहात्प्रागस्वामि-कस्यानुकूलोद्देश्येन पुरुषेण प्रतिग्रहात्स्वत्वत्स्वत्वं स्यादिति। अन्योद्देश्यकत्वादेः प्रतिबंधवत्त्वे च गौरवम् । न च तादृशत्यागो दानाभास एव ससंप्रदानको हि त्यागो दानं संप्रदानं च, ददस्वेत्यनुमतिप्रकाशनद्वारा दानक्रियाहेतुत्वेन। न च असन्निहितस्य तत्त्वमिति, न ततो दातुः स्वत्वनाश इति वाच्यम् । "तीर्थे संकल्पितं यद्यत्तदन्यत्र प्रदीयते। दाता तीर्थफलं भुंक्ते प्रतिग्राही न दोष भाक् ।। मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत् । विद्यते सागरस्यांतो दानस्यांतो न विद्यते।।" इति वाक्यात्तादृशदानसिद्धेस्तस्माद्दानमेव परस्वत्वजनकं प्रतिग्रहप्रागभावस्यापेक्षणीयत्वात् न प्रतिग्रहवैफल्यम् । अत एव यस्मै दत्तं तस्य प्रतिग्रहेण दातुः स्वत्वनिवृत्तिः। अस्तु वा दत्तद्रव्यस्वीकारत्वरूपप्रतिग्रहत्वेन स्वीकर्त्तव्यद्रव्यदानत्वेन वेति विनिगमकाभावात्। दानं स्वस्वत्वध्वंसद्वारा परस्वत्वजनकम् । प्रतिग्रहश्च स्वस्वत्वजनकः। उभयथापि मूल्यग्रहणं विनेति व्यर्थम् । विक्रयस्य

परस्वत्वजनकत्वे मानाभावात्। न विक्रीतद्रव्यस्वीकारत्वरूपक्रयत्वेन स्वीकर्तव्यद्रव्यविक्रयत्वेन वा क्रयत्वमित्यत्रापि विनिगमनाविरहः। मूल्यदानपूर्वकस्वीकारस्यैव क्रयत्वात विक्रयत्वस्य गौरवेणानिवेशात्। किंच स्वस्वत्वध्वंसजनकेत्यपि व्यर्थम् , अव्यावर्तकत्वात् । अपिचाग्निप्रक्षेपो होम इत्यप्ययुक्तम्, 'देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागो यागः स एव प्रक्षेपार्वच्छिन्नो होम' इति वाचस्पतिमिश्राद्युक्तेः, 'यागएव विशिष्टदेशप्रक्षेपोपहितः होम' इतिविवेकोक्तेश्च। अस्तु च ऋत्विजां त्यागाद्यनुमानस्य स्वस्वत्वध्वंसोनुमतः देशत्यागात् विदेशस्थस्वामा-स्वस्वत्वध्वंसवत् । वस्तुतस्तु दानत्वयागत्वहोत्वादयो मानसप्रत्यक्षगम्या जातिविशेषाः। न 'श्राद्धस्य पित्रपेक्षया यागत्वं' ब्राह्मणापेक्षया दानत्वम्' इति विवेकोक्तेस्तयोः सांकर्यान्न जातिरितिवाच्या, श्राद्धस्य गौणतदुभयरूपत्वात् । वस्तुतः श्राद्धस्य यागत्वमेव, उद्देश्यपित्रादिस्व त्वाजनकत्वात। ब्राह्मणाभावेपि श्राद्धोक्तेः। "पिंडास्तु गोज....प्रेभ्य" इत्यादिनान्यत्रापि प्रतिपत्तेः। विष्णुं यजते इत्यादौ द्वितीयार्थोप्युद्देश्यत्वम। तत्त्वं च तस्येदमित्यादिज्ञानविषयत्वम् । देवतायाः स्वत्वोपगमे तु यागत्वं दानत्वव्याप्यं होमत्वं यागत्वव्याप्यमिति सिद्धम्। देवपूजादिकमपि याग एवेति वृत्तमप्रवृत्तेन। अत एवं संसृष्टिस्थलेऽसाधारणस्वत्वनाशोत्तरं साधारणस्वत्वोत्पादात्- तत्र सकलत्वविशेषणरहित-दानलक्षणाव्याप्तिरित्यपास्तम् दानत्वजातेस्तत्राभावात्। परमत्र स्वत्वानुकूलत्वविशेषणात् - संसृष्टिनिरास इत्यन्ये। तत्र न स्वत्वनाशः किंतु परस्वत्वोत्पत्तिमात्रम्। न स्वस्वत्ववति परस्वत्वानुपपत्तिः। तत्रेच्छाया यत्तेजकत्वात् । स्वस्वत्वध्वंसपूर्वकत्वाविशेषणां... तन्निरास इत्यन्ये। परे त्वदृष्टविशेषजनकत्वविशे ...णात्तद्व्यावृत्तिरित्याहुः। एतेन विनिमये विक्रयतत्..क्षणातिव्याप्तिरित्यपास्तम् । विक्रयत्वादेर्जातिजातिरेव....त। मूल्यातिरिक्तद्रव्यग्रहणप्रयुक्तस्वस्वत्वध्वंस... रस्वत्वानुकूलत्यागो विनिमय इत्यन्ये। किम् स्वत्वामिति चेत् । अत्र प्राचीनाः - यथेष्टविनि..योज्यत्वं स्वत्वम् तच्च शास्त्रानिषिद्धविनियोगोपाय... क्रयप्रतिग्रहादिस्तद्विषयत्वम्। तच्च न बहिरिन्द्र...यवेद्यम् । प्रतिग्रहादेर्मानसज्ञानविशेषस्य बहिरिन्द्र... यायोग्यत्वात्। नव्यास्तु-प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहार-प्रामाण्यानुरोधात् स्वत्वमतिरिक्त एव पदार्थः। तच्च स्वत्वं दानादितो नश्यति, प्रतिग्रहादितश्च स्वत्वमुत्पद्यते। तच्च बहिरिं द्रिययोग्यं स्वं पश्यामीति प्रतीतेस्तदीययथेष्टविनि

योज्यत्वज्ञानस्य तदीयस्वत्व-साक्षात्कारहेतुत्वात्। न यथेष्टविनियोगाद्य-ज्ञानदशायां-स्वत्वसाक्षात्कारापत्तिः। वस्तुतस्तदीययथेष्टविनियोज्यते तदीयस्वत्व-व्याभिचारित्वग्रहदशायां तद्ग्रहेऽपि स्वत्वसाक्षात्कारानुदयात्। तदीयस्वत्वसाक्षात्कारं प्रति तदीयस्वत्वव्याप्यतदीययथेष्टविनियोज्यत्वव-दिदमित्याकारकज्ञानस्य हेतुत्वं वाच्यम् । तथा च स्वत्वस्यानुमितिरेव नतु साक्षात्कारः। स्वत्वेलौकिकविषया-कल्पनेलौकिकविषयिता-शालितत्साक्षात्कारे तादृग्विशेषदर्शनस्य हेतुत्वकल्पने च गौरवात् । स्वं पश्यामीत्यनुव्यवसायस्तु-सुर-भि चन्दनं पश्यामीत्यादिवद्विशेषणांशो लौकिकविषयत्वावगाही। न चायोग्यत्वकल्पने लौकिक साक्षात्कारे स्वत्वस्य प्रतिबंधत्वकल्पने गौरवा..ति वाच्यम्, तस्यायोग्यत्वकल्पने लौकिकविष यताविरहादेव तत्रत्यक्षवारणसंभवात् । योग्यतद्गोचरलौकिकप्रत्यक्षसामग्र्यास्तद्गोचरानुमितौ गौरवादित्याहुः। तच्च कर्म त्रिविधं - प्राप्तंविकार्यं, निर्वर्त्यं च। तत्र संयोगादिक्रियाजन्यलशालि प्राप्तम्। यथा-ग्रामं गच्छतीत्यादौ ग्रामादिः। यल्लब्धसत्ताक-मेवावस्थांतरमापद्यते तद्विकार्यम् । यथा-काष्टं भस्म करोति, सुवर्णं कुंडलं कतीत्यादौ काष्ठादिपललक्ष्यस्य काष्ठावयवादेः एव भस्मादिसंबंधरूपावस्थांतरप्राप्तिः। यत्तु या यत्कर्मनाशकं फलं जनयति तद्विकार्यम् यथा- काष्ठं लुनातीत्यत्र काष्ठमिति। तन्न, काष्ठलक्ष्यस्य काष्ठावयवस्य कर्मतया क्रियायास्तदंशकत्वासंभवात् । अत्र हिं काष्ठपदस्य काष्ठावय वोलुनातेरारंभकसंयोगप्रतिद्वंद्विविभागानुकूल योव्यापारोऽर्थः। तथा च काष्ठावयववृत्त्यारंभकसं-योगप्रतिद्वंद्विविभाग-जनकक्रियानुकूलव्यापारानु कूलकृतिमानित्यन्वयधीरिति काष्ठावयवस्य प्राप्यकर्मतैवावस्थांतरप्राप्त्यभावान्न विकार्यता। तण्डुलं पचतीत्यादौ तण्डुलपदलक्ष्यस्तंडुलावयवः पच्यर्थो रूपादिपरावृत्त्यवच्छिन्नो विक्लित्त्यवच्छिन्नतेजस्संयोगः। तथाचधात्वर्थजन्यफलशालित्वा-त्सतोवस्थांतरप्राप्तेश्च उभयविधकर्मत्वं तंडुलावयवस्येष्टम् असंकीर्णस्थानमुक्तमेवेत्यदोषः। यत्क्रियया निष्पद्यते तन्निर्वर्त्यम् यथा-घटं कटं वा करोतीत्यादौ घटादिः अत्र कृञः फलावच्छिन्नव्यापारबोध कत्वाभावाद्गौणकर्मत्वम् । तच्च साधनाख्यकृतिविषयत्वम् । अत एव वीरणं करोतीत्यादिर्न प्रयोगः। वीरणादावुपादानताख्यविषयताया एव सत्त्वात्। यत्तु कटादिपदस्य कटाद्यवयवे निरूढलक्षणा। तत्रविनालक्षणांकटादेर्गौण-

कर्मत्वसंबन्धिकारकत्वासंभवात्। निरूढलक्षणाया मुख्य गौणवादकत्वाच्च न वीरणं करोतीति मुख्यप्रद इति। तन्न, घटं जानाति अतीतमित्यादौ घटाकटादेरपि गौणकारकत्वसंभवात् । स्तोकं पचत्यादौ क्रियाविशेषणपदांतरद्वितीयाविशेष भक्तिवत् प्रयोगसाधुत्वाय नामार्थधात्वर्थप दान्वयस्वीकारेणाभेदस्य संसर्गत्वात्। तदाकारे विशेषणविभक्तिवदस्तु साभेदार्थिकास्याः कारकत्वाभावस्तु क्रियान्वितकर्तृत्वाद्य तत्वाभावात् - इति दिक्।।

स्वतन्त्र कर्त्ता स्वातन्त्र्यञ्च कर्तृप्रत्ययसमभिव्याहारे प्रधानी भूतधात्वर्थाश्रयत्वम्। नचोक्तस्वातन्त्र्यलक्षणे कर्तृप्रत्ययसमभिव्याहार इति विशेषणं व्यर्थं तद्रहितलक्षणेनैवाऽभिष्टसिद्धेरिति वाच्यम्। कर्मप्रत्ययस्थले पक्वस्तण्डुलो देवदत्तेनेत्यादौ धात्वर्थस्य फलस्य प्राधान्यात्तदाश्रयस्य तण्डुलस्य कर्तुत्वापत्तेर्दुर्वारतया देवदत्तस्य तदनापत्त्या तदर्थमुक्ततद्विशेषणस्य सार्थक्यात्। एवञ्च धात्वर्थव्यापाराश्रयत्वं स्वतन्त्रत्वमिति तल्लक्षणं फलितम्। नचैवं देवदत्तेन पाचयति यज्ञदत्त इत्यादौ णिजर्थव्यापाराश्रयस्य धात्वर्थव्यापारा-ऽऽश्रयत्वाऽभावात्कर्तृत्वं न स्यादिति वाच्यम्। णिचो द्योतकत्वेन द्वितीयव्यापारस्यापि धात्वर्थत्वात्तदाश्रयस्य यज्ञदत्तस्य कर्तृत्वे बाधकाऽभावात्। अथवा व्यापाराश्रयस्य भाष्योक्तस्याऽन्याऽनधीनस्य वा स्वतन्त्रत्वाच्च। नचाऽन्यानधीनस्य स्वतन्त्रत्वे णिजन्तस्थले प्रयोज्यकर्तुः प्रयोजकाऽधीनत्वात्कर्तृत्वं न स्यादिति वाच्यम्। सर्वेषां स्वस्वव्यापारे स्वतन्त्रत्वस्य निर्विवादत्वात्। नचैवं प्रयोज्यप्रयोजकव्यवहारो न स्यादिति वाच्यम्। उत्तरव्यापारा-धीनत्वेनोक्तव्यवहारोपपत्तेरिति दिक् ।

साधकतमं करणम्। साधकतममित्यस्य प्रकृष्टमिथ्यर्थः। तच्च यद्व्यापाराऽव्यवधानेन कार्य्यनिष्पत्तिस्तत्। उक्तञ्च, क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विक्ष्यते यदा यत्र करणं तत्तदास्मृतम्। अथवा कारकान्तनिष्ठव्यापारसम्बन्धावच्छिन्नक्रियाहेतुत्वाऽभावत्त्वे सति क्रियाहेतुत्वरूपम्। अथवा व्यापारत्त्वे सति करणत्वं तत्त्वमिति।

ननु क्रियते येनेति व्युत्पत्त्या करणल्युडन्तकरणेतिमहासंज्ञया करणपदादेव साधकत्वे लब्धे साधकपदस्यैव साधकतमार्थपरत्वादिष्टसिद्धौ तमब्ग्रहणं व्यर्थमित्याशङ्कते- तमबग्रहणं किमिति। उत्तरयति- गङ्गायां घोष इति। अयम्भावः, व्यर्थं तमब्ग्रहणं ज्ञापयति इह कारकप्रकरणे शब्दसामर्थ्यगम्यप्रकर्शाऽश्रयणं न भवतीति। अत एव सत्यदाहमणीभूतोचप्रयोगे सप्तमीसिद्धिः।

अन्यथाऽधिक्रियते-ऽस्मिन्नतिव्युत्पत्त्याऽधिकरणपदादाधारलाभे आधारपदस्य प्रकृष्टाधारपरत्वे तिलेषु तैलं दध्नि सर्पिरित्यादावेवाऽधिकरणसंज्ञया सप्तमी स्यान्नतु गङ्गायां घोश इत्यादावपीति। घोषाऽऽधारत्वस्य तीरधर्मस्याऽत्यन्त-सान्निध्यात्प्रवाहे आरोपादयं प्रयोगः। गङ्गातो व्यवहिते घोषे तु गङ्गाशब्दस्य तीरे लक्षणया तथा प्रयोग इति बोध्यम्। न च महासंज्ञकोक्तार्थलाभासमर्था-तत्प्रत्याधारादिपदस्य चरितार्थत्वेन शब्दसामर्थ्यगम्भ्यप्रकर्षेत्याद्यु-क्तज्ञापनासंभवात्प्रत्युदाहरणस्य का गतिरिति वाच्म्। आधारपदे स्वरितत्वप्रतिज्ञया गौणधारग्रहणस्य सुलभत्वादित्यलम्।

रामेण वाणेन हतो बालीति। कर्तृत्वशक्तिमान्कर्तृक्रियाभावसम्बन्धश्च कर्तृतृतीयार्थः। करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्च करणतृतीयार्थः। रामकर्तृकबाणकरणकप्राणवियोगाश्रयो बालीति बोधः।

प्रकृत्यादिभ्य उपसंख्यानम्। एतद्विहिततृतीयाऽर्थेऽभेदोऽन्योऽपि, उक्तञ्च प्रकृत्यादिगणज्जाता तृतीया तु तदात्मताम्। अवच्छेदकता-वृत्तिप्रकारत्वादि संशति इति। प्रकृत्या चारुरित्यादितः स्वाश्रयाधिकरणयावत्कालवृत्तिचारुत्वात्, प्रकृत्यभिन्नचारुत्ववानिति वा बोधः।

दिवः कर्म च। ननु पूर्वसूत्रात्करणपदाऽनुवृत्त्यैव कर्मकरणयो-र्विधानसिद्धौ चकारो व्यर्थ इति चेन्न। तस्य संज्ञाद्वयसमा-वेशार्थतवेन सार्थक्यात्। अतएव अक्षैर्देवयते इत्यत्र परत्वात्तृतीया कर्मवाच्चऽकर्मकत्वप्रयुक्तपरस्मैपदाऽभावश्च सिद्ध्यति। विप्रतिषेधशास्त्रबलात्तृतीयैवाऽत्र कर्मत्वकरणत्वेतिशक्तिद्वयं बोधयतीति बोद्ध्यम्। नचोभयसंज्ञाविधानं तृतीयान्तघटितप्रयोगस्य द्वितीयान्तघटित प्रयोगस्य च साधुत्वार्थमेव तत्रोक्तशास्त्रबलेन तृतीयैव चेद्द्वितीयान्तघटित-प्रयोगस्याऽसाधुत्वमेव स्यादिति। वाच्यम्। अक्षाणां फलाश्रयत्वसमानाऽधिकरण-कर्मत्वविविक्षायामक्षान्दीव्यतीति द्वितीयान्तघटितप्रयोगस्य साधुत्वात्। न च दिवः साधकतमस्योभयसंज्ञा-विधानेनाऽक्षाणां देवितेत्यादौ तृतीयाऽऽपत्तिरिति वाचम्। तृतीयातः परत्वात्कृद्योगलक्षणषष्ठ्या एव प्राप्तेः नचैवं मनसा देव इत्यादावपि षष्ठ्यापत्तिरिति वाच्यम्। कर्तरि कर्मण्येव कृद्योगषष्ठीविधानाद्धेतौ तदविधानेन तत्राऽदोषात् तत्र हेतुतृतीयान्तेन मनसेत्यनेन पचाद्यजन्तस्य देवशब्दस्य समासः मनसः, संज्ञायामित्यनेन तृतीयाया अलुक । न च दिवः साधकतमे कारकत्व-करणत्वोभयशक्त्यङ्गीकारे कर्मणि प्रत्यये कृते करणत्वशक्ते-

रनुक्तत्वात्तृतीयाऽऽपत्त्याऽक्षादीव्यन्तामित्यादिप्रयोगे नैवोपपद्येतेति वाच्यम्। अपादानमुत्तराणि कारकाणि बाधन्ते इत्यस्योदाहरणभूते गां दोग्धीति प्रयोगे कर्मणि प्रत्यये कर्मत्वशक्तेरुक्तत्वेऽप्यपादानत्वशक्तेरनुक्तत्वेन प्राप्तपञ्चमीनिवृत्त्यर्थं द्रव्यगताऽनेकशक्तिमध्ये एकस्या अभिहितत्वेऽपरस्या अप्यभिहितवदवबोध इति न तत्र पञ्चमी इतिभाष्योक्त्यैव तत्रत्यापत्ते रपि परिहारादित्यलम्।

अपवर्गे तृतीया। अपवर्ग इत्यस्य फलप्राप्तावित्यर्थः, सत्यां फलप्राप्तौ प्रयोजनाऽभावादेव क्रियायामप्रवृत्तिरिति फलप्राप्तिशब्देन फलप्राप्तिपूर्वकस्त्याग उच्यते। तथा च, फलप्राप्तिपूर्वके क्रियात्यागे द्योत्ये सति कालाऽध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाऽध्ववाचकाभ्यां तृतीयेत्यर्थः।

सहयुक्तेऽप्रधाने। ननु सहेनाऽप्रधाने इत्येव सिद्धे युक्तग्रहणं व्यर्थमिति चेन्न। तस्य सहशब्दयोग एव न किन्तु तदर्थयोगेऽपि तृतीया भवतीत्यर्थकल्पनेन सार्थक्यादित्याशयेनाऽऽहमूले सहार्थेनेति। अर्थयोगेऽपि तृतीयाविधानादेव शब्दयोगं विनाऽपि क्वचिचित्तृतीया भवतीत्याह- विनाऽपितद्योगमिति। प्रमाणञ्चात्र वृद्धोयूने त्यादिनिर्देश एवेति। सहार्थः साहित्यं तच्च स्वसमभिव्याहृतक्रिया-दिसमानकालिकसमभिव्याहृत-क्रियादिमत्त्वरूपम्। क्वचित्समानदेशक्रियावत्त्वमपि तत्। एतद्रूपसाहित्यस्य विवक्षणदेव तिलवापोत्तरं तत्रैव क्षेत्रेमाषवापेतिलैः सह माषान्वपतीति सिद्ध्यति। पुत्रेण सहागतः पितेति नैतत्सूत्रोदाहरणं युक्तम् पुत्रस्याऽऽगमनक्रियाकर्तृत्वादेव ततस्तृतीयासिद्धेः, एवञ्च पुत्रेण सह स्थूल इति मुख्यमुदाहरणं बोध्यम्। पुत्रकर्तृकागमनक्रिया-समानकालिकागमन-क्रियावान्पितेति प्रथमवाक्याद्बोधः। पुत्रसम्बन्धिस्थौल्यसमान-कालिकस्थौल्यवान्पितेति द्वितीयतो बोधः। एवं सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादितोऽपि पुत्रसम्बन्धिभार-वहनसमानकालिकं गर्दभीकर्तृकभारवहनमित्यादिक्रमेण बोधः। पुत्रेण सहागतः पितेत्यत्रप्रधानीभूता-त्पितृशब्दात्तृतीयाव्यावृत्त्यर्थमेव सूत्रेऽप्रधानग्रहणं तत्राऽन्तरङ्गत्वा-त्प्रातिपदिकार्थमात्रे पथमैव चेदलमप्रधानग्रहणेन। न च पुत्रेण सह पितुरागमनमित्यादौप्रथमाया अविषये पितुस्तदापत्ति स्तदवस्थैवेति वाच्यम्। (उपपदविभक्तेरि) तिन्यायेन कर्तृकर्मणोः कृति इत्यनेन तत्र षष्ठ्या एव विधानादिति दिक्।

येनाङ्गविकारः। अङ्गमस्यास्तीत्यङ्ग अर्शादित्वादच्, अङ्गस्य

विकारोऽङ्गविकारः अङ्गिनो विकार इति तदर्थ५ प्रयोज्यत्वं षष्ठ्यर्थः, येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयवोलक्ष्यते तत्राऽभेदस्तृतीयार्थः तथा च, यदभिन्नाङ्गवृत्तिविकारप्रयोज्याङ्गिनो विकारो लक्ष्यते ततस्तृतीयेति सूत्रार्थः। अङ्गिविकारः किमिति। अर्शाद्यजन्ताङ्गग्रहणं किमर्थमिति प्रश्नः। समाधत्ते-अक्षिकाणमस्येति। अयम्भावः, अर्शाद्यजन्ताङ्गस्याऽग्रहणे-यदभिन्नाङ्गवृत्तिविकारोलक्ष्यतेततस्तृतीयेत्यर्थे प्रत्युहदारणभूतोक्तप्रयोगे प्रथमां वाधित्वा तृतीयऽऽपत्तिः, तद्ग्रहणसत्त्वे तु पूर्वोक्तार्थे नोक्तापत्तिः, अङ्गिनो विकारस्येहाऽलक्ष्यत्वात्। अक्ष्णा काण इत्यत्र तु तृतीया न स्यादङ्गवृत्तिविकारस्याऽलक्ष्यत्वात्। यद्यपि अक्ष्येव काणं तथापि, अवयवधर्मस्य काणत्वस्य समुदाये आरोपेण शरीरे शरीरावच्छिन्ने आत्मनि च काणत्वव्यवहार इति बोध्यम्। नचाऽक्षिगतविकारवाचकस्यैव काणशब्दत्वेन प्रसिद्धत्वादर्थादेवाऽक्ष्णो लाभे तस्योक्तार्थानामिति, न्यायेन प्रयोगाप्राप्त्याऽक्ष्णा काण इत्यस्य साधुत्वं न स्यादिति वाच्यम्। द्वौ विप्राविितिवदुक्तप्रयोगस्य साधुत्वात्। अनेन प्रकारेणेदृशप्रयोगसाधुत्वे एतत्सूत्रमेव प्रमाणमित्यलम्।

इत्थम्भूतलक्षणे। इत्थंशब्दोऽत्र प्रकारमात्रपरः, प्राप्त्यर्थकाद्भूधातोः कर्तरि क्तः, कर्मविभक्तान्तेनेत्थंशब्देन भूतशब्दस्य समासः, लक्षणशब्दोऽ करणसाधनः, लक्ष्यते येन तल्लक्षणमिति विग्रहः कर्मषष्ठ्यन्तेनेत्थं-भूतशब्देन लक्षणशब्दस्य समासः तथा च कञ्चित्प्रकारं प्राप्तस्य लक्षणे द्योत्ये प्रत्यासत्त्या लक्षणवाचकात्तृतीयेत्यर्थः। जटाभिस्तापस इति। तापसत्त्वज्ञानजनकज्ञानं जटाज्ञानं तद्विषयत्वं जटाया इति तस्य लक्षणवाचकत्वेन ततस्तृतीयेतिभावः। न च जटाभिस्तापसो ज्ञात इत्थें ज्ञानक्रियायां जटानां करणत्वादेव तत उक्तविभक्त्युपपत्तावलमेतत्सूत्रेणेति वाच्यम्। करणत्वस्याऽविवक्षाया लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयाविधानार्थमस्याऽऽवश्यकत्वात्। इत्थं भूतस्य यत्र लक्षणवाचकात्पृथगेवोपस्थितिर्भवति तत्रैवाऽनेन तृतीया विधीयते। अत एव कमण्डलुपाणि छात्रमद्राक्षीदित्यादौक मण्डलुपदात्तृतीया न भवति। न च सुपो धातुप्रातिपदिकयोरित्यनेन कमण्डलुपदादुत्पन्नायास्तृतीयाया लुकि न दोष इति वाच्यत्। समासे कृते तृतीयोत्पत्तिरिति तस्याः समासरूप प्रापिदिकाऽनवयवत्वेन लुगनापत्त्या दोषस्य तादवस्थ्यादिति कैयटः। शेखरकृतस्तु, कमण्डलुः पाणौ यस्येति बहुब्रीहिः, कमण्डलुयुक्तपाणिरूपस्य

कमण्डलुपाणित्वस्यैव लक्षणात्वेन तस्यैवलक्षणवाचकत्वेन तत एव तृतीयाऽऽपत्तिः अनुर्लक्षणे इति सूत्रे भाष्येऽप्युक्तमेतत, तत्र हि, सकृदसौ कमण्डलुपाणिशच्छासत्रो दृष्टस्तस्य तदेव लक्षणम्भवतीत्युक्तम्। तत्र तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः। कमण्डलोर्लक्षणत्वे तु कमण्डलुपाणिरेव लक्षणमित्यर्थकः स एव लक्षणमिति वदेत् कैयटमतेऽपि तत्प्रदर्शितं तीतृतीयालुगनापत्तिरूपदूषणं तु न युक्तम्, कमण्डलुशब्दात्तृतीयाविधानेऽपि तन्मध्यपतितन्यायेन तस्याः समासरूपप्रातिपदिकत्वस्याऽक्षतत्वेन लुको दुर्वारत्वात्। अत एव नरं मन्य इत्यादौ सुपोधात्विति अमः कुतो न लुगित्याशंक्याऽम्विधानसामर्थ्यान्न लुगिति समाहितम्भाष्ये। कैयटमते तु अमः समासरूपप्रातिपदिकाऽनवयवत्वेन लुकोऽप्राप्त्या भाष्यकृत्कृतस्य शंकासमाधानस्य स्पष्टैवाऽसङ्गतिस्तस्मान्मदुक्तमेव ज्याय इत्याहुः।

ननु शास्त्रीयहेतोः कर्तृत्वाल्लौकिकहेतोः करणत्वाच्च तृतीयासिद्धौ हेताविति सूत्रं व्यर्थमित्याशङ्क्य हेतुत्वकरणत्वयोर्भेदप्रदर्शनेन समाधत्ते द्रव्यादिसाधरणमिति। आदिपदेन गुणक्रिययोर्ग्रहणं तथा च द्रव्यगुणक्रियाऽन्यतमत्वेसति नियतव्यापाररहितत्वं हेतुत्वम् द्रव्याद्यन्यतमत्वे सति नियतव्यापारसहिततत्वं करणत्वमिति लक्षणं पर्य्यवसितम्। हेतोरुदाहरणं दण्डेन घटः, दण्डहेतुको घट इत्यर्थः। अत्र दण्डस्य व्यापारवत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम्। करणस्योदाहरणं पुण्येन दृष्टो हरिः। पुण्यकरणकं हरिदर्शनमित्यर्थः अत्र पुण्यस्य क्रियाजनकत्वेऽपि व्यापाररहितत्वान्न हेतुत्वमिति हेतुकरणयोर्भेदन करणतृतीयया हेतुतृतीयया आगतार्थत्वाद्धेताविति सूत्रमावश्यकमिति भावः।

ननु अलं श्रमेणोत्यादौ क्रियावाचकपदाऽसत्त्वेन क्रियाया अप्रतीत्या करणत्वाऽभावातृतीया न स्यादित्याशङ्क्य समाधत्ते गम्यमानापि क्रियेत्यादि। श्रमेणोत्यादिपदजन्यबोधविषयाऽपीति तदर्थः। नतूच्चार्य्यमाणक्रिया-वाचकपदजन्यबोधविषयैवेति तदाशयः। अलं शब्दस्य निषेधोऽर्थः, श्रमेण साध्यं नास्तीत्यर्थः, वाक्यैकदेशस्य प्रयोगेण साधनक्रियाम्प्रति श्रमस्य

करणत्वात्तृतीयेति। न च साध्यमित्यर्थज्ञानेऽपि साध्यमित्यस्य श्रमेणेति सुबन्तार्थत्वेन क्रियात्वाऽभावात् कथं श्रमस्य करणत्वमिति वाच्यम्। साध्यमित्यत्र प्रकृतिभूतधात्वर्थं प्रति श्रमस्य करणत्वाक्षतेरिति दिक्।

अशिष्टव्यवहारेति। अशिष्टानां संकीर्णाचाराणं यो व्यवहारः क्रिया तद्बोधकप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य संकीर्णाचारत्वं तद्वाचकात्प्रातिपदिकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । दास्यासंप्रयच्छत इति। दासीसम्प्रदानकं रतिफलकं दानमिति बोधः।

# करणत्वविवेचनम्

करणत्वं च—

**अपि च कारकान्तरेऽचरितार्थत्वे सति फलहेतुत्वम्।**

तत्र चरितार्थत्वं च तद्व्यापारमुत्पाद्यैव फलहेतुत्वम्। कर्ता हि सिद्धं कुठारादि व्यापारयञ्छिदालक्षणं फलमुत्पादयतीति करणे चरितार्थो न तु फले। कर्मापि करणे चरितार्थं कर्मासिद्धौ करणव्यापारासिद्धेः। नहि छेद्यासिद्धौ कुठारादिकरणानां छिदानुकूलव्यापारः संभवति। अत एव करणव्यापारविषयत्वं कर्मत्वमिति प्राञ्चः। अधिकरणमपि कर्तृकर्मान्यतरव्यापारद्वारा क्रियानिष्पादकम्। यथा गृहे चैत्रः स्थाल्यां तण्डुलं पचतीत्यत्र चैत्रव्यापारसंपादनेन गृहस्य तण्डुलव्यापारसंपानेन स्थाल्याश्च कारकत्वम्। संप्रदानापादानयोश्च न क्रियासामान्यहेतुत्वम्। किं तु दाने अनुमतिप्रकाशनेन कर्तुरिच्छामुत्पाद्य संप्रदानस्य, पतनाश्रये च पर्णादौ पतनप्रतिबन्धकसंयोगनाशजनकविभागमुत्पाद्य चापादानस्य चरितार्थत्वमेवेति।

करणं च कारकान्तरे न चरितार्थम्, तस्य चरमकारणत्वात्। एवं च तदनुकूलव्यापारमद्वारीकृत्य तज्जनकत्वं फलायोगव्यच्छिन्नकाणत्वं पर्यवसितं करणत्वमिति लब्धम्। एवं च तन्मते चरमकारणमेव करणमिति कुठारादौ करणपदं गौणमिति।

वस्तुतस्तु व्यापारवत्कारणं करणम्। तेन हस्तादौ कुठारादौ च नाव्याप्तिः। न चैवमदृष्टद्वारा कार्यमात्रे, विशेशतः ज्ञानेच्छादौ मनोय़ोगद्वारा आत्मनः करणत्वापत्तिः। उपधेयसंकरस्येष्टत्वात्। अनुकूलकृति-समवायित्वलक्षणकर्तृत्वस्य निरुक्तकरणत्वादन्यत्वेनै-वोपाध्योरसंकरात्।

कर्तृभिन्नत्वेन करणलक्षणं विशेषणीयमित्यपि कश्चित्।

इत्थं चानुमितौ व्याप्तिस्मृतिः करणं परामर्शो व्यापारः। चक्षुरादेश्चाक्षुषादिज्ञाने चक्षुरादिसंयोगः, श्रोत्रस्य श्रावणज्ञाने श्रोत्रमनःसंयोगो न तु शब्दो व्यापारः, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात्। न च शब्दश्रावणे शब्दो व्यापारः, लाघवेन श्रावणत्वावच्छिन्नं प्रत्येव श्रोत्रत्वेन हेतुत्वात्, न तु शब्दश्रावणत्वावच्छिन्नं प्रति गौरवात्।

अन्ये तु कुठारादौ करणे कर्तृव्यापारविषयत्वं करणत्वम्। तच्च

फलानुकूलकर्तृव्यापारवत्त्वं कुठारादौ छिदानुकूलकर्तृजन्यन-मनोन्नमनादिमत्त्वमविकलम्। न चैवं स्थाल्यादेरधिकरणस्यापि कर्तृव्यापार्यत्वात् तत्रातिव्याप्तिरिति वाच्यम्, उपाधेयसंकरस्येष्टत्वात्। छिदादौ चेष्टायाः प्रयत्नरूपकर्तृव्यापारविषयत्वेन हस्तादेश्च तज्जन्यचेष्टावत्त्वेन च करणत्वमिष्टमेव। चेष्टया हस्तादिना च छिनत्तीति प्रयोगस्य सर्वसंमतत्वात्। कर्मादौ विवक्षावशात्प्रयोगो भवत्येव। तण्डुलेन स्थाल्यां पाकं साधयति गवा दानं साधयति ब्राह्मणेन दानं साधयतीति प्रयोगात् चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगात् कर्तुः शरीरस्य च वारणाय द्रव्यासमवायि-क्रियानुकूलकृतिमद् - भिन्नत्वं विशेषणं देयम्। कृतिमत्त्वं च समवायेनावच्छेदकतया च बोध्यम्। तेन शरीरस्य आत्मनश्च व्युदासः, विशिष्टाभावाच्च हस्तादिसंग्रहः। इदं च न व्याप्ति-स्मृत्यादिसाधारणम्। तत्र च पूर्वनिरुक्तमेव करणत्वम्। इत्थं च करणपदं नानार्थमेवेत्याहुः।

परशुना छिनत्तीत्यादौ निरुक्तं करणत्वं तृतीयार्थः। प्रकृत्यर्थस्य तत्राश्रयत्वेन धात्वर्थस्य छिदादेश्च निरूपकत्वेनान्वयः। इत्थं च परशुनिष्ठकरणता-निरूपकच्छिदानुकूलकृतिमानित्यन्वयधीः इति प्राञ्चः।

परशुना छिनत्ति न दात्रेणेत्यादौ निरूपकत्वादेः (संसर्गस्य) प्रतियोगितावच्छेदकसंबन्धत्वाभावान्नञ्र्थानुरोधेन निरुक्तकरणतानिरूपितं जन्यत्वमेव तृतीयार्थः। तत्र च निरुपकतया प्रकृत्यर्थस्य आश्रयतया च धात्वर्थस्यान्वयः। इत्थं च परशु (निष्ठकरणता) निरूपितजन्यता-श्रयच्छिदानुकूलकृतिमानित्यन्वयधीः इति नव्याः।

जटाभिस्तापसमद्राक्षीदित्यादौ तृतीया न करणत्वे किंतु विशेषणत्वे। तच्च प्रकृते वैशिष्ट्यरूपं, जटाभिस्तापसमित्यस्य जटाविशिष्टं तापसमित्यर्थः। अत्र चोपलक्षणत्वेऽभिधानम्। उपलक्षणत्वं च बोध्यान्यव्यावृत्त्यनवच्छेदकत्वे सति तत्समानधिकरणत्वम्। जटाया अतापसव्यावृत्त्यनवच्छेदकत्वात्। न चैवं शमदमादिना तापस इति न स्यात्। इष्टत्वात्। विवक्षावशादुक्तप्रयोगस्येष्टत्वे च विशेषणोप-लक्षणसाधारणं वैशिष्ट्यमात्रं न तूपलक्षणत्वमपि नियामकम्।

अक्ष्णा काणः पादेन खञ्जः मुखेन त्रिलोचन इत्यादौ वपुषा चतुर्भुजः इत्यादौ (च) येनाङ्गविकार इतिसूत्रेण तृतीया। येनाङ्गेन विकारो हानिराधिक्यं वा तदङ्गवाचकात्तृतीयेति सूत्रार्थः। इत्थं च तृतीयायाः वृत्तित्वमर्थः। तच्चेह

व्युत्पत्तिवैचित्र्यात्काणादिपदार्थैकदेशे विकार एवान्वेति।

काणत्वं च बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वं, जातप्रभृत्य-न्धस्याकाणत्वे तु चक्षुष्मद्गोलकवत्त्वे सतीति विशेषणीयम्। एकेनार्धेन वा चक्षुषा पश्यन्नपि काण एव गोलकार्धे गोलके वा चक्षुरभाववत्त्वात्। गोलकोपघातेऽपि काण एव तदवच्छेदेन चक्षुरभावात्। यदि च तद्गोलकावच्छेदेन चक्षुःसत्त्वेप्युपघातादेव च न तत्र चाक्षुषं तदोपहतगोलकवत्त्वमेव काणत्वम्। अक्ष्णेतिपदसमभिव्याहारस्थले च काणपदं चक्षुःशून्यत्वविशिष्टस्य उपहतत्वविशिष्टस्य वा बोधकम्। अक्षिपदं च यदाकदाचिच्चक्षुष्मद्गोलकपरम्। एवं च तादृशगोलकवृत्ति चक्षुःशून्यत्वमुपघातो वा तद्विशिष्टवानित्यक्ष्णा काण इति वाक्यार्थः।

एवं खञ्जत्वं तथाविधसंस्थानशून्यपादवत्त्वम्। पादेनेत्यादिपद-समभिव्याहारस्थले च तादृशसंस्थानशून्यवानेव खञ्जपदार्थः। तथा च पादवृत्ति यत्तथाविधसंस्थानशून्यत्वं तद्विशिष्टवानित्यर्थः।

त्रिलोचन इत्यस्य च बहुव्रीहिणा लोचनत्रयवानित्यर्थः। तथा च मुखवृत्तिलोचनत्रयवानिति 'मुखेन त्रिलोचन' इतिवाक्यार्थः। एवमन्यत्राप्यूह्यम्।

अक्ष्णा काण इत्यादौ पूर्वनिरुक्ता एव पदार्थाः। तृतीया चाभेदे। तथा च तादृशगोलकाभिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानिति वाक्यार्थः। मुखेन त्रिलोचन इत्यत्र तु त्रिलोचनपदं लोचनत्रयविशिष्टवत्परम्। तथा च मुखाभिन्नलोचनत्रयविशिष्टवानिति वाक्यार्थः। एवं पादेन खञ्जः इत्यादावपि बोध्यमित्यपि कश्चित्।

धनेन कुलमित्यादौ तृतीया हेतुत्वे। कर्तृकरणयोस्तृतीयेत्यत्र क्रियासाकाङ्क्षे निरुक्तकरणत्वे तृतीया विहिता, अत्र तु नामार्थेनापि साकाङ्क्षे हेतुत्वसामान्ये हेताविति सूत्रेण तृतीया विहिता इति भेदः।

पुत्रेण सहागत इत्यादौ तृतीयायाः कर्तृत्वमर्थः। सहशब्दस्य समभिव्याहृतक्रियाऽऽगमनादि। तस्य चैकवर्त्मादिरूपैक-देशावच्छेदे-नैककालीनत्वसंसर्गेण समभिव्याहृतक्रियायामन्वयः। एवं च पुत्रकर्तृकतादृशागमनसमानकालीनागमनकर्तेत्यन्वयबोधः।

वस्तुतस्तु सहशब्दस्यापेक्षाबुद्धिविशेषविषयत्वादिरूपसाहित्यमर्थः।

तृतीयार्थश्च वृत्तित्वं संख्यामात्रं वा। सहशब्दार्थस्य च संबन्धः प्रथमान्तार्थेनैव (तृतीयार्थेनापि समं वाक्यार्थः?)। निपातातिरिक्तनामार्थयोरेवभेदान्वयस्य विभक्तयर्थद्वारकत्वात्। साहित्यावच्छेदेन च सर्वत्र विधेयान्वयः। एवं च पुत्रेण सहागतश्चैत्रः इत्यस्य पुत्रवृत्तिसाहित्यावच्छिन्नश्चैत्र आगमनकर्तेत्यन्वयबोधः। तेन शिष्येण सहोपाध्यायो ब्राह्मणः सुन्दर इत्यादौ द्रव्यगुणादिविधेयस्थले नानन्वयः।

**सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।**

इत्यादौ पुत्रेषु भारवहनकर्तृत्वाभावेऽपि तादृशप्रयोगादेकदेश-विद्यमानेत्यध्याहारेण एकदेशविद्यमानतायामुक्तसाहित्यस्यावच्छेदकतया अन्वयः। अत एवात्र विद्यमानसहार्थे तृतीयेति शाब्दिका वदन्ति। एवं पुत्रेण सह भुङ्क्ते इत्यादावप्यूह्यम्।

एवं धान्येन गोत्रेण गार्ग्यः प्रकृत्याभिरूप इत्यादौ प्रकृत्यादिभ्यश्चेत्यनेनैव तृतीयाऽभेदार्थिका। धान्याभिन्नधनवानिति, गार्ग्यो गर्गकुलोत्पन्नः गोत्राभिन्नगर्गकुलोत्पन्न इति बोधः। प्रकृतिपदस्य साहजिकोऽभिरूपपदस्य रमणीयतावानर्थः। तथा च साहजिकाभिन्नरमणीयतावानित्यन्वयधीः।

**करणत्वं कारकान्तरेऽचरितार्थत्वे सति क्रियाहेतुत्वम्।**

इत्थमपि कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावः सत्यन्तार्थः। कर्तृकारके आरम्भकसंयोगप्रतिद्वन्द्विविभागानुकूलकुठारादिक्रियाया एव छिदादिधात्वर्थतया कर्तुः कुठारादिकरणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नाप्रतिप्रसङ्गः। कर्मणस्तु तादृशक्रियाहेतुत्वविरहादेव नातिप्रसङ्गः। अधिकरणमपि कर्तृकर्मान्यतरव्यापारद्वारा क्रियाहेतुः। चैत्रो गृहे स्थाल्यामोदनं पचतीत्यादौ गृहस्थाल्याद्यधिकरणं कर्तृकर्मसंयोगद्वारा पाकादिक्रियासाधनम्। संप्रदानं स्वानुमतिप्रकाशनेन कर्तुरिच्छाद्वारा दाननिमित्तम्। अपादानं पतनप्रतिबन्धकसंयोगनाशकपत्रादिविभागद्वारा पतनादिनिमित्तमिति नातिप्रसङ्गः।

न चैवं कुठारादिकरणस्यापि कर्तृनिष्ठव्यापारसापेक्षत्वादसंभवः। कारकान्तरनिष्ठव्यापारसंबन्धावच्छिन्नजनकत्वाभावस्य सत्यन्तार्थतया कुठारादिक्रियारूपच्छिदिक्रियायां कुठारस्य तादात्म्यसंबन्धेन हेतुतया कर्तृनिष्ठव्यापारसंबन्धेनाहेतुत्वात्। न च कुठारादिव्यापारदावतिव्याप्तिरिति वाच्यम्, तस्यापि एतन्मते लक्ष्यत्वात्। अत एव फलायोगव्यवच्छिन्नं कारणं

करणम् इति वदन्ति।

वस्तुतस्तु व्यापारवत्त्वे सति कारणं करणम्। न चैवं कार्यमात्रे ज्ञानादौ चादृष्टस्य मनोयोगस्य च व्यापारस्य सत्त्वादात्मनोऽपि करणत्वापत्तिः, इष्टत्वात्। उपधेयसंकरेऽपि कर्तृत्वकरण-त्वलक्षणोपाधेरसंकरात् व्यवहारभेदोपपत्तेः। इत्थं चानुमितौ व्याप्तिज्ञानं करणम्, परामर्शस्य व्यापारत्वात्। चाक्षुषादौ चक्षुरादि, तत्संयोगस्य व्यापारत्वात्। श्रावणज्ञाने श्रोत्रमनः संयोगस्य व्यापारत्वान्न तु शब्दस्य, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात्।

परे तु फलानुकूलकर्तृव्यापारवत्त्वम् अस्ति च कुठारादेः छिदानुकूलकर्तृसंयोगादिमत्त्वम्। न च गृहस्थाल्याद्यधिकरणस्यापि कर्तृव्यापारवत्त्वात्करणत्वापत्तिरिष्टत्वात्। स्थाल्यान्नं साधयतीत्यादिप्रयोगात्। गवा दानं साधयति, ब्राह्मणेन दानं साधयतीत्यादिप्रयोगात् तत्रापि तदिष्टम्।- चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगात्, कर्तुः शरीरस्य च वारणाय द्रव्यसमवायिभिन्नात् क्रियानुकूलकृतिमतो भिन्नत्वेन विशेष्यम्। कृतिमत्त्वं समवायेनावच्छेदकतया च। तेन शरीरस्यापि व्युदासः। भिन्नादित्यन्तेन हस्तादिसंग्रहः, हस्तादिना छिनत्तीति प्रयोगात्। व्यापारवत्त्वं च जनकतया। तेन व्याप्तिस्मृत्यादिसाधारण्यमित्याहुः।

अत्र परशुना छिनत्तीत्यादौ निरुक्तकरणत्वं तृतीयार्थः। आश्रयत्वेन प्रकृत्यर्थान्वितस्य तस्य धात्वर्थे निरूपकत्वेनान्वयः। तथा च परशुनिष्ठ-करणतानिरूपकच्छिदानुकूलकृतिमानिति वाक्यार्थ इति प्राञ्चः।

नव्यास्तु परशुना छिनत्ति न दात्रेणेत्यादौ नञर्थान्वयानुरोधेन निरुक्तकरणत्वनिरूपितं जन्यत्वमेव तृतीयार्थः। तस्य च निरूपितत्वेन प्रकृत्यर्थान्वितस्य आश्रयतया धात्वर्थेनान्वयः। इत्थं च परशुनिरूपितं जन्यत्वं दात्रनिरूपितजन्यत्वाभावश्च छिदायामन्वेतीत्याहुः।

जटाभिस्तापस इत्यादौ तृतीयोपलक्षणे। तत्त्वं च अतद्व्यावृत्त्यनवच्छेदकत्वे सत्यतद्व्यावृत्तिसामानाधिकरण्यम्। अस्ति च जटायामतापसव्यावृत्त्यनवच्छेदकत्वं शमादिमत्त्वस्यैव तदन्यूना-नतिरिक्तवृत्तितया तदवच्छेदकत्वात्। शमादिना तापस इतित्वपप्रयोगः। विवक्षातस्तथा प्रयोगस्येष्टत्वे तु विशेषणोपलक्षणासाधारणवैशिष्ट्यमेव तृतीयार्थः।

अक्ष्णा काणः, पादेन खञ्जः इत्यादौ 'येनाङ्गविकारः' इत्यनेन तृतीया,

येनाङ्गेन विकारो हानिराधिक्यं वा तदङ्गबोधका तृतीयेति सूत्रार्थः। एवं चात्र तृतीयाया वृत्तित्वमर्थः। तच्च व्युत्पत्तिवैचित्र्यात्काणादिपदार्थस्यैकदेशे विकारेऽन्वेति। काणत्वं बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वम्। जातमात्रान्धस्याकाणत्वे तु चक्षुष्मद्गोलकवत्त्वे सतीति वाच्यम्। यदि च बहिरवच्छेदेन चक्षुसत्त्वेऽपि उपघातादेव न चाक्षुषं तदोपहतगोलकवत्त्वं काणत्वमक्षिपदं चक्षुष्मद्गोलकपरम्। एवं च चक्षुष्मद्गोलकवृत्ति यच्चक्षुःशून्यत्वमुपघातो वा तद्विशिष्टगोलकवानिति अक्ष्णा काण इत्यस्यार्थः।

एवं खञ्जत्वं संस्थानविशेषशून्यपदवत्त्वम्। तथाच पदवृत्ति यत्तथाविधसंस्थानशून्यत्वं तद्विशिष्टपदवानिति पादेन खञ्ज इत्यस्यार्थः। मुखेन त्रिलोचन इत्यत्र बहुव्रीहिः। तथाच मुखवृतिलोचनत्रयवानित्यर्थः।

परे तु अक्ष्णा काण इत्यादावभेदे तृतीया। तथा च तादृशगोलकाभिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानिति वाक्यार्थः। एवं मुखेन त्रिलाचेन इत्यत्र त्रिलोचनपदं लोचनत्रयविशिष्टवत्परम्। तथा च मुखाभिन्नलोचनत्रयविशिष्टवानित्यर्थ इत्याहुः।

धनेन कुलमित्यादौ हेतुत्वे तृतीया। क्रियान्वयिनिरुक्तकरणत्वार्थिका तृतीया 'कर्तृकरणयोस्तृतीया' इत्यनेन विहिता। 'हेतौ' इति सूत्रेण तु नामार्थेऽप्यन्वितहेतुत्वार्थिकेति विशेषः।

पुत्रेण सहागतः पितेत्यत्र तृतीयायाः कर्तृत्वमर्थः। सहशब्द-समभिव्याहृतक्रिया सहशब्दार्थः। एककालीनत्वसंबन्धेन तस्याः समभिव्याहृतक्रियायामन्वयः। तथा च पुत्रकर्तृकमनस्समानकालीनो-गमनकर्तेत्यर्थः। शिष्येण सह गुरुर्ब्राह्मणः, पुत्रेण सह पिता सुन्दरः, इत्यादौ सहार्थो ब्राह्मण्यादि समानकालीनत्वसंबन्धेन ब्राह्मणत्वादिपदार्थैकदेशेऽन्वेति।

परे तु सहार्थः साहित्यमेकधर्ममात्रं, तृतीयार्थो वृत्तित्वं संख्यामात्रं वा, तथा च शिष्यवृत्तिसाहित्यवान्गुरुर्ब्राह्मण इत्यादिर्बोध इत्याहुः।

**एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्।**
**सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।।**

इत्यादौ पुत्रेषु भारवहनकर्तृत्वाभावेऽपि सहप्रयोगे विद्यमानेत्यस्याध्याहारात् विद्यमानत्वं साहित्यं सहशब्दार्थः। तथा च समानकालीनत्वसंबन्धेन

दशपुत्रवृत्तिविद्यमानत्वविशिष्टविद्यमानत्वाश्रयः इत्याकारकान्वयबोधः। अत एव विद्यमानसहार्थे तृतीयेति शाब्दिकाः।

धान्येन धनी, गोत्रेण गार्ग्यः, प्रकृत्याभिरूप इत्यादौ तृतीयाया अभेदोऽर्थः। तथा च धान्याभिन्नधनवान् , गोत्राभिन्नगर्गकुलोत्पन्नः, साहजिकाभिन्न-रमणीयतावानित्यर्थः। प्रकृतिपदस्य साहजिकार्थत्वाद-भिरूपपदस्य रमणीयतावदर्थकत्वादिति दिक्।।

३- करणत्वं कारकांतराचरितार्थत्वं सति हेतुत्वम्। कारकांतरनिष्ठ-व्यापारद्वारा क्रियात्वाभावः। सत्यंतार्थः। कर्तृकारवेः आरंभक गप्रतिद्वंद्विविभागानुकूलकुठारादिक्रियाया एव च्छिदादिधात्वर्थतया कर्तुः कुठारादिकरणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नातिप्रसंगः। कर्मणस्तु तादृशक्रियाहेतुत्वविरहादेव नातिप्रसंगः। अधिकरणमपि कर्तृकर्मान्यतरव्यापारद्वारा क्रियाहेतुः। चैत्रो गृहे स्थाल्यामोदनं पचतीत्यादौ गृहस्थाल्याद्यधिकरणं कर्तृकर्मसंयोगद्वारा कर्तृकर्मसंयोगद्वारा पाकादिक्रियासाधनं संप्रदानं स्वानुमितिप्रकाशनेन कर्तुरिच्छाद्वारा दाननिमित्तम् अपादानं पतनप्रति बंधकसंयोगनाशकपत्रादिविभागद्वारा पतनादिनिमित्तमिति नातिप्रसंगः। न चैवं कुठारादिकरणस्यापि कर्तृनिष्ठव्यापारसापेक्षत्वादसंभवः। कारकांतरनिष्ठव्यापार-संबंधावच्छिन्नजनकत्वाभावस्य सत्यंतार्थतया कुठारादिक्रियायां कुठारस्य तादात्म्यसंबंधेन हेतुतया कर्तृनिष्ठव्यापारसंबंधेनाहेतुत्वात्। न च कुठारादिव्यापारादव्याप्तिरिति वाच्यम् , तस्यापि एतन्मते लभ्यमानत्वात्। अत एव फलायोगव्यवच्छिन्नं कारणमिति वदंति। वस्तुतस्तु व्यापारवत्त्वे कारणं करणम् । न चैवं कार्यमात्रे ज्ञानादौ चास्य मनोयोगस्य च व्यापारस्य सत्त्वादात्मनः करणत्वापत्तिः, इष्टत्वात्। उपधेयसंकरे कर्तृकरणत्वलक्षणो-पाधेरसंकरात् व्यवहारभेदापत्तेः। इत्थं चानुमितौ व्याप्तिज्ञानं कारणम् परामर्शस्य व्यापारत्वात्। चाक्षुषादौ चक्षुरादिसंयोगस्य व्यापारत्वात्। श्रावणज्ञाने श्रोत्रसंयोगस्य व्यापारस्य सत्त्वात्। न तस्य, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात् तु फलानुकूलकर्तृव्यापारवत्त्वम् । अस्ति च कर्णादिच्छिदानुकूल-कर्तृसंयोगादिमत्त्वम्। न हिस्थाल्याद्यधिकरणस्यापि कर्तृव्यापारवत्त्व-करणत्वापत्तिरिष्टत्वात् । स्थाल्यान्नं साधयतीत्यादिप्रयोगात्। गवा दानं साधयति, ब्राह्मणेन दानं साधयतीत्यादिप्रयोगात् । तत्रापि तदिष्टं, चैत्रात्मना चैत्रेण वा पचतीत्यप्रयोगात् । कर्तुः शरीरस्य च

वारणाय द्रव्यसमवायिभिन्नतत्त-त्क्रियानुकूलकृतिमतो भिन्नत्वेन विशेष्यम्। कृतिमत्वं समवायेनावच्छेदकतया च। तेन शरीरस्यापि व्युदासः। भिन्नेत्यनेन हस्तादिसंग्रहः। हस्तादिना छिदन्तीति प्रयोगात् । व्यापारवत्त्वं जनकतया। तेन व्याप्तिस्मृत्यादिसाधारण्यमित्याहुः। अत्र परशुना छिनत्तीत्यादौ निरुक्तकरणत्वं तृतीयार्थः। प्रकृत्यर्थान्वितस्य तस्य धात्वर्थनिरूपकत्वेनान्वयः। तथा परशुनिष्ठकरणतानिरूप-कत्वच्छिदानुकूलकृतिमानिति वाक्यार्थ इति प्रांचः। नव्यास्तु परशुना छिनत्ति न दात्रेणेत्यादौ नञर्थान्वयानुरोधेन निरुक्तकरणत्वनिरुपित-जन्यत्वमेव तृतीयार्थः। तस्य निरूपितप्रकृत्यर्थान्वितस्य आश्रयतया धात्वर्थे अन्वयः इत्थं च परशुनिरूपितजन्यत्वदात्रनिरूपितजन्य त्वाभावश्च च्छिदायामन्वेतीत्याहुः। जटाभिस्स इत्यादौ तृतीयोपलक्षणे। तत्त्वं च अतव्द्यावृच्छेदकत्वे सत्यतव्द्यावृत्तिसामानाधिकरण्य अस्ति च घटानाम् अतापसत्वव्यावृत्त्यनवकाश कत्वं शमादिमत्त्वस्यैव तदन्यूनातिरिक्त-वृतितयातदवच्छेदकत्वात्। शमादिनातापस इत्यप्रयत्न विवक्षातः तथा प्रयोगस्येष्टत्वे तु विशेषणोपलक्षणसाधारणवैशिष्ट्यमेव तृतीयार्थः। अक्ष्णाकाणः, पादेन खंज इत्यादौ "येनागंविकारः" इत्यनेन तृतीया, येनांगेन विकारो हानिराधिक्यंवा तदंगबोधकात्तृतीया एवञ्चात्र तृतीयाया वृत्तित्वमर्थः तच्च व्युत्पत्तिवैचित्र्यात्काणादिपदार्थस्यैव विकारेऽन्वेति। काणत्वं बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वम् । जातमात्रांधस्याकाणत्वे तु चक्षुमद्गोलकत्वे सतीति वाच्यम् । यदि च बहिरवच्छेदेन चक्षुःसत्त्वेऽपि उपघातादेव न चाक्षुषं तदागोलकवृत्तियत्तच्छून्यत्वमुपघातो वा तद्विशिष्टः पुरुषः अक्ष्णा काण इत्यस्यार्थः। एवं खंजत्वं संस्थान-विशेषणशून्यपदत्वम्। तथाचपदवृत्तियत्ततथाविधसंस्थानशून्यत्वं तद्विशिष्टः पुरुष इति पादेन खंज इत्यस्यार्थः। परे तु-अक्ष्णा काण इत्याद्यभेदे तृतीया। तथा च तादृशगोलकाभिन्नं यच्चक्षुः शून्यमुपहतं तद्वानिति वाक्यार्थः एवं मुखेन त्रिलोचन इत्यत्रलोचनपदं लोचनत्रयविशिष्टवत्परम् तथा च मुखादिभिन्नलोचनत्रयविशिष्टवानित्यर्थ इत्याहुः। धनेन कुलमित्यादौ हेतुत्वे तृतीया। क्रियान्वयिनिरुक्तकरणत्वार्थिकातृतीया "कर्तृकरणयोस्तृतीया" इत्यनेन विहिता "हेतौ" इति सूत्रेण तु नामार्थान्वित हेतुत्वार्थिकेति विशेष पुत्रेण सहागतः पितेत्यत्र तृतीयायाः कर्तृत्वमर्थः समभिव्याहृतक्रिया सहशब्दार्थ एककालीनत्व संबंधेन

समभिव्याहृतक्रियायामन्वयः। तथा च पुत्रकर्तृकागमनसमान-कालीनागमनकर्त्तेत्यर्थः। शिष्येण सह गुरुर्ब्राह्मणः, पुत्रेण सह पिता सहार्थो ब्राह्मणादिसमानकालीनत्वसंबंधेन ब्राह्मणत्वादि पदार्थैकदेशेऽन्वेति। अपरे तु सहार्थः साहित्येकधर्ममात्रं, तृतीयार्थो वृत्तित्वं संख्यामात्रंवा, तथाचशिष्यवृत्तिसाहित्यवान्गुरुर्ब्राह्मण इत्याहुः। "एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।।" इत्यादौ पुत्रेषु भारवहनकर्तृत्वाभावेऽपि सहप्रयोगे विद्यमानपदाध्याहारात्। विद्यमानत्वं साहित्यं सहशब्दार्थः तथा च समानकालीनत्वसंबंधेन दशपुत्रवृत्तिविद्यमान-त्वविशिष्टविद्यमानत्वाश्रयः। अत एव विद्यमानत्वं सहसब्दार्थ इति शाब्दिकाः। धान्येन धनी, गोत्रेण गार्ग्यः, प्रकृत्याभिरूप इत्यादौ तृतीयाया अभेदोऽर्थः। तथा च धान्याभिन्नधनवान्, गोत्राभिन्नगर्गकुलोत्पन्नः, साहजिकाभिन्नरमणीयतावानित्यर्थः। प्रकृतिपदस्य साहजिकार्थत्वात् । अभिरूपपदस्य रमणीयतापदार्थत्वादिति दिक् ।

।। इति करणनिरूपणम् ।।

कर्मणा यमभिप्रैति स सम्प्रदानम्। कर्त्रा दाधात्वर्थक्रियाकर्मणा सम्बन्धेच्छाविषयीभूतो यः स सम्प्रदानमिति सूत्रार्थः। सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञाबलेन दानार्थकधातुयोग एवैतत्सूत्रप्रवृत्तिः, दाधात्वर्थश्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपः। अत एव रजकस्य वस्त्रं ददातीत्यत्र न चतुर्थी। अत्र दाधातुर्भाक्त, अधीनीकरणरूपेऽर्थे इति तदर्थः। दाधातुप्रयोग एव चतुर्थीविधानादेव, अजां ग्रामं नयति, हस्तं निदधाति वृक्षे इत्यादौ न चतुर्थी, इति वृत्तिकारमतम्। भाष्ये तु दानस्येति क्रियामात्रस्योपलक्षणम्, कर्त्रा क्रियामात्रकर्मणा सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वमित्यर्थः। अत एव खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति प्रयोगः सङ्गच्छते। अत एव च 'दाशगोघ्नौ सम्प्रदाने इत्याद्यपि चरितार्थम्। अजाया ग्रामसम्बंधो जायतामित्येवेच्छा न तु ग्रामोऽजासम्बद्धो जायतामित्याकारेच्छेति ग्रामस्याऽजारूपकर्मणा सम्बद्धुमिष्यमाणत्वाऽभावान्न अजां ग्राममित्यादौ सम्प्रदानत्वाऽतिप्रसङ्गः, विप्राय गां ददातीत्यादौ सम्पद्रानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्च सम्प्रदानचतुर्थ्यर्थः कर्मणा सम्बन्धश्च स्वत्वादिरूपो बोध्यः। देवदत्तकर्तृवृत्तिविप्रोद्देशक-

कर्मणेति किम्। अयम्भावः सूत्रे कर्मणेत्यनुपादाने कर्त्रा क्रियया सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वमित्यर्थे विप्राय गां ददातीत्यादौ गोरूपकर्मणोऽप्युद्देश्यत्वात् अर्थाद्देवदत्तकर्तृवृत्तिदानक्रियया सम्बन्धेच्छाविषयी-भूतत्वात्सम्प्रदानत्वापत्तिः। न च कर्मसंज्ञाया अनवकाशत्वाद्गोः कर्मसंज्ञैव स्यान्न सम्प्रदानसंज्ञेति वाच्यम्। सम्प्रदानसंज्ञायाः कर्मसंज्ञया सह पर्य्यायतया विधानेन कर्मसंज्ञायाः सावकाशत्वात्तया सम्प्रदानसंज्ञाया अबाधेन दोषस्य तादवस्थ्यात्। अतः कर्मणेत्यस्योपादानमावश्यकं सति तस्मिन् गोरूपोद्देश्यत्वाऽभावात्तेनैव सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वेन न तस्याऽऽपत्तिलेशोऽपीतिदिक् ।।

यं स ग्रहणं किमिति। सूत्रेतयोरनुपादाने क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिः तस्यैव सम्प्रदानत्वापत्तिः। न च कर्तृसंज्ञाया निरवकाशत्वेन तयोक्तसंज्ञाबाधेन नाऽऽपत्तिरिति वाच्यम्। अकर्मकधातुविषये कर्तृसंज्ञायाः सावकाशत्वेन तया सम्प्रदानसंज्ञाबाधाऽनापत्त्या पूर्वोक्ताऽऽ-पत्तेस्तादवस्थ्यात्। न च कर्तुः कर्तृत्वाऽभावेन गोः कर्मत्वमेव न स्यादिति वाच्यम्। कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वेनाऽदोषात्। अत एव सार्थाद्धीयते इत्यत्र कर्तुरपादानत्वेऽपि कर्मणि लकारसिद्धिः। एवञ्च यं स ग्रहणमावश्यकमिति भावः।।

ननु सूत्रे कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादित्यत आह-क्रियया यमभिप्रैति सोऽपि सम्प्रदानमिति। कर्मरहितक्रिययेति तदर्थः। सकर्मकेषु कर्मसंज्ञा सम्प्रदानसंज्ञाया बाधिका स्यादित्याह- पत्ये शेत इति। उद्देश्यत्वं चतुर्थ्यर्थः। पत्युद्देश्यकशयनकर्त्री पत्नीति बोधः। न च तादर्थ्यामुपकार्य्योपकारकभावरूपः सम्बन्धः, दानादयोऽपि सम्प्रदानत्वेनाऽभिप्रेतविप्राद्यर्था एवेति तादर्थ्याचतुर्थ्यैव सिद्धौ 'चतुर्थी सम्प्रदाने' इदं सूत्रं व्यर्थमेवेति वाच्यम्। दाशगोघ्नौ सम्प्रदाने' इत्येत-तदर्थन्तस्याऽऽवश्यकत्वात्। सम्प्रदाने कारके दाशगौघ्नाविति निपात्येते इति सूत्रार्थः। चतुर्थी सम्प्रदाने इत्यस्यासत्त्वे दाशगौघ्नाविति सूत्रे सम्प्रदानपदेन कारकग्रहणं च स्यादित्येतदर्थं तदावश्यकमितिभावः। अत एव मूले दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नोऽतिथिरिति तयोरर्थः प्रतिपादितः। न च दाशागोघ्नावित्यत्र सम्प्रदानशब्दस्य सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यर्थकल्पनान्नैतत्सूत्राऽनुपपत्तिरिति वाच्यम्। उक्तरीत्योक्तसूत्रा-ऽनुपपत्तिपरिहारेण तदनावश्यकत्वेऽपि तत्सप्रदानकं दानमिति

बोधार्थं चतुर्थी सम्प्रदाने इत्यस्यावश्यकत्वात्। सम्प्रदानसंज्ञासत्त्वे विप्रसम्प्रदानकं गोकर्मकं दानमिति बोधः। तादर्थ्याचतुर्थ्यां विप्रार्थं गोकर्मकं दानमिति बोधः इत्येवमनयोर्भेदो बोध्यः।

ननु अभिलषतेरुचधातुसमानार्थकतया हरये रोचतेभक्तिरित्यत्रेव हरिर्भक्तिमभिलष्यतीत्यत्राप्यर्थग्रहणसामर्थ्यात्परामपि कर्मसंज्ञां बाधित्वा सम्प्रदानसंज्ञा कुतोनेत्याशङ्क्य समाधत्ते-अन्य कर्तृकाऽभिलाषोरुचिरिति। अभिलषितकर्त्रपेक्षया यदन्यदभिललषतिकर्म तत्कर्तृको रुचिरिति तदर्थः। यत्किञ्चिन्निष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणव्यापारो रुचधात्वर्थ इतिफलितम्। यत्किञ्चिद्विषयकप्रीत्यनुकूलप्रीतिसमानाधिकरणव्यापारोऽभिलषतेरर्थः। तथा च हरये रोचते भक्तिरित्यत्र हरिनिष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणव्यापारो भक्तिनिष्ठ इति सम्प्रदानसंज्ञा जाता। हरिर्भक्तिमभिलष्यतीत्यत्र तु भक्तिविषयकप्रीतिसमानाधिकरणव्यापारों हरिनिष्ठ इत्युभयोः समानार्थकत्वाऽभावन्नाऽभिलषति योगे सम्प्रदानसंज्ञेति समाधातुराशयः। एवं समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीतिव्यधिकाव्यापारार्थकप्रीधातुयोगे हरिं प्रीणयति भक्तिरित्यत्रापि न सम्प्रदानसंज्ञा, रुचधातुसमानार्थत्वाभावात् प्रीयमाण इति निर्देशेन प्रीधातुयोगे तदभावकल्पनाच्चेत्यलम्।

प्रीयमाणः किम्। देवदत्ताय रोचते मोदकः पथीति। ननु प्रीयमाणपदाऽभावे क्रियाजनकत्वमात्रविवक्षायां सूत्रस्य चारितार्थ्यात्-सम्प्रदानसंज्ञायां मन्दं प्रवृत्तस्य परत्वादधिकरणसंज्ञया बाधेन न प्रत्युदाहरणे काचिदनुपपत्तिरिति चेन्न। देवदत्तं रोचते मोदकः पथीत्यस्यापत्तिरिति प्रत्युदाहरणस्याशयात्। प्रीयमाणपदसत्त्वे तु कर्मसंज्ञाया अस्यापवादत्वेन न दोष इति भावः।।

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः। एषां धातूनां प्रयोगे बोधनेच्छाविषयीभूतः सम्प्रदानसंज्ञको भवतीत्यर्थः। बोधविषया स्तुतिः श्लाघतेरर्थः। गोपी स्मरात्कृष्णाय श्लाघत इति। स्मरादिति हेतौ पञ्चमी, तथाच, गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिकाऽर्थात्वृष्णबोधविषया स्तुतिरिति बोधः। बोधविषयमितरादर्शनयोग्यदेशस्थापनं ह्नुतेरर्थः। आत्मानमित्यध्याहारः। तथा च, गोपीकर्तृका स्मरहेतुका कृष्णवृत्तिबोधविषया आत्मकर्मिका इतरादर्शनयोग्यदेशस्थापनाऽनुकूला क्रियेतिबोधः। तिष्ठत इति। गोपीकर्तृकास्मरहेतुका कृष्णसम्प्रदानिका स्वाऽभिप्रायबोधाऽनुकूला

स्थितिक्रियेतिबोधः। शपत इति। गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिका स्वाऽभिप्रायबोधाऽनुकूला शपथक्रियेति बोधः। शेखरकृतस्तु स्तुत्यादिना बोधनं श्लाघादेरर्थः। तथाच स्तुत्या आत्मानुरागं कृष्णं बोधयतीत्यर्थः। एवं ह्नुत्या स्थित्या शपथेन च आत्मानुरागं कृष्णं बोधयतीत्यर्थः। यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयतीत्यर्थः। एतत्सूत्रघटकज्ञीप्स्यमानपदे णयर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणम्। श्लाघादेः स्तुत्यादिमात्रार्थकत्वे कृष्णं श्लाघते न्हुत इत्येव, ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञषेः सन्नन्तात्कर्मणि शानजित्याहुः।।

धारेरुत्तमर्णः। धारयतेः प्रयोगे उत्तमर्णः सम्प्रदानसंज्ञको भवतीत्यर्थः। अत्र सूत्रे धारेरिति धृङ् अवस्थाने इति णयन्तस्य ग्रहणम्, नतु णयन्तस्य धृञः तथा सति मोक्षस्य धृञ्धात्वर्थकर्तृत्वानापत्तेः, धृञः सकर्मत्वेन मोक्षस्य कर्मत्वानापत्तेश्च, धृङो ग्रहणे तु तस्याऽकर्मकत्वा-दणयन्तकर्त्तुर्मोक्षस्य णौ 'गतिबुद्धि' सूत्रेण कर्मत्वमुपपद्यते। भक्ताय धारयति मोक्षं हरिरिति। स्थापनानुकूलव्यापारोऽत्र धारिधात्वर्थः। तथा च भक्तसम्प्रदानको हरिकर्तृको मोक्षकर्मकाऽवस्थापनानुकूलव्यापार इति बोधः। ननु भक्तस्य कारकत्वाऽभावात्सम्प्रदानसंज्ञा न स्यादिति चेन्न। भक्ताऽसत्त्वे प्रेरणाया अभावात्प्रेरणाजनकत्वेन भक्तस्य कारकत्वाक्षतेः। ननु मोक्षस्य ऋणत्वे सत्येव भक्तस्य तत्स्वामित्वादुत्तमर्णत्वेन सम्प्रदानत्वं स्यात्परं मोक्षस्य ऋणत्वमेव न, ऋणं हि नाम यत्र सजातीयदानमङ्गीकृत्य परदत्तद्रव्यादानन्तदुत्तर-कालिकगृहीतद्रव्यसजातीयद्रव्यदाननाश्योऽदृष्टविशेषः प्रकृते सोक्षस्यैवंविधऋणत्वाऽभावेन भक्तस्योत्तमर्णत्वाऽसम्भवादिति चेन्न। अवश्यदेयत्वमात्रेण मोक्षेऽपि ऋणत्वव्यवहारस्य सुलभत्वात्। अत्र सूत्रे उत्तमर्णग्रहणाऽभावे देवदत्ताय शतं धारयति ग्रामे अत्र ग्रामस्याऽपि सम्प्रदानत्वापत्तिः। न च परत्वादधिकरणसंज्ञैव स्यादिति वाच्यम्। सत्येवमुत्तमर्णेऽपि हेतुसंज्ञापत्तेर्दुवारत्वात्। तस्मादुत्तमर्णग्रहणाऽभावे हेतुसंज्ञाया इवाऽधिकरणसंज्ञाया अप्यपवादभूतेयं सम्प्रदानसंज्ञा स्यादिति तद्द्वयावृत्त्यर्थमुत्तमर्णग्रहणमिति दिक् ।।

स्पृहेरीप्सितः। अत्र सूत्रे ईप्सितपदमिच्छाविषयपरं तथा च स्पृहयतेः प्रयोगे इच्छाविषयः सम्प्रदानसंज्ञको भवतीत्यर्थः। पुष्पेभ्यः स्पृहयति। स्पृहयतिरिच्छामात्रवाची, फलावच्छिन्नेच्छावाची च, आद्ये सम्प्रदानत्वं

तत्प्रयोगेवोदाहृतम्। अन्त्ये कर्मत्वं पुष्पाणि स्पृहयतीति यथा, इत्येवाह मूले- प्रकर्षविवक्षायां तु परत्वाकर्मसंज्ञेति। फलाश्रयत्वेन विवक्षायामित्यर्थः। अस्य सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां चारितार्थ्येन परत्वात्कर्मसंज्ञेति तद्भावः। पुष्पसम्प्रदानकेच्छेति चतुर्थीसमभिव्याहारे पुष्पकर्मच्छेति द्वितीयासमभीव्याहारे च बोधः। ननु स्पृहयतेः प्रयोगे सम्प्रदानत्वविधानात् कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेत्यनुपपन्नमिति चेन्न। क्रियासम्बन्धित्वमात्रविवक्षायां षष्ठ्या तदुपपत्तेः।।

क्रुधदुहेर्ष्याऽसूयार्थनां यं प्रतिकोपः। एषामर्थ इवाऽर्थो येषां ते तथोक्तास्तेषाम्। विषयतया क्रुधाद्यर्थानां धातुनां प्रयोगे तन्मूलभूतकोपसम्बन्धिनः सम्प्रदानसंज्ञेति तदर्थः। तेषु क्रुधदुहोरकर्मकत्वात्षष्ठ्यां प्राप्त्यामितरयोः कर्मसंज्ञायां प्राप्तायां वचनमिदम्। क्रोधश्चाऽमर्षरूपो मानसो वृत्तिविशेषः, उत्कर्षविरोधिधर्मा-रोपाऽनुकूलव्यापारात्मकः। द्रोहश्चाऽपकाररूपः। सच तदीयगुणे दोषत्वारोपाऽनुकूलव्यापाररूपः। इति क्रोधद्रोहयोर्भेदः। ईर्ष्या अक्षमा साचपरकीयपाण्डित्यादिगुणानामसहनं तच्च गुणादिज्ञानजन्यद्वेषात्मकम्। असूयाच दोषतादात्म्यारोपः। इति द्रोहादस्य भेदः। हरये क्रुध्यतीत्यादि। हरिसम्प्रदानकः क्रोधः। हरिसम्प्रदानकोद्रोहः। हरि सम्प्रदाननिका ईर्ष्या। हरिसम्प्रदाननिका असूयेति बोधः। ननु कुप क्रोधे इत्यनुशासनात्कोपस्यैव क्रोधपदार्थत्वात्क्रोधस्य कोपप्रभवत्वमनुपपन्नमिति चेन्न। वाक्चक्षुरादिविकारानुमेयप्ररूढकोपस्यैवाऽत्र क्रोधपदार्थत्वेन तस्य कोपप्रभवत्वोपपत्तेः। एवञ्च कोपक्रोधयोर्भेदान्न कुपधातु योगे सम्प्रदानत्वम्। अत एव कुप्यति कस्मैचिदित्याद्यसाध्येवेत्यलम्।।

तादर्थ्ये चतुर्थी। तादर्थ्यामुपकार्य्योपकारकभावरूपः सम्बन्धः तस्मिन् गम्यमाने उपकार्य्योपकारकवाचकाच्चतुर्थीति तदर्थः। मुक्तये हरि भजतीत्यादितो मुक्तिरूपोपकार्य्योपकारकं हरिकर्मकं भजनमित्यादिक्रमेण बोधः। उक्तरूपः सम्बन्धोऽनेकविधो नतु कार्य्यकारणभावरूप एव, अत एव ब्राह्मणाय दधीत्यादयोऽपि प्रयोगाउपपद्यन्ते। उक्तरूपतादर्थ्यस्य सम्बन्धत्वेन विवक्षायां षष्ठ्येव स्पष्टमिदं गुरोरिदं गुर्वर्थमित्यत्र भाष्ये।।

क्लृपि सम्पद्यमाने च। क्लृपीति सप्तमी नत्विकानिर्देशः। अत्राऽर्थग्रहणं सम्पूर्वकस्य पद्यतेरुत्पत्त्यर्थः, तथाच क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्त्तमानाद्विकृतिवाचकात्प्रातिपदिकाच्चतुर्थीति वार्तिकार्थः। भक्तिर्ज्ञानाय कल्पते

ज्ञानरूपेण परिणमते इत्यर्थः। अत्र प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी तयोरभेदाविवक्षायां तु परत्वात्प्रथमैव, भक्तिर्ज्ञानं कल्पते इत्यलम्।।

क्रियार्थोपपदस्य च कर्मणि स्थानिनः। क्रिया अर्थः फलं यस्य तत्क्रियार्थं तेन स्ववाचकं लक्ष्यते क्रियाफलार्थवाचकमुपपदं यस्य स तथोक्तस्तस्य क्रियार्थोपपदस्य, अर्थश्च प्रत्यासत्त्या क्रियारूप एव गृह्यते स्थानिन् शब्दस्याऽप्रयुज्यमानवाचित्वमिति व्याकरण शास्त्रे प्रसिद्धं तथा च यत्फलितन्तदाह- क्रियार्था क्रिया उपपदं यस्येत्यादि। फलेभ्यो यातीत्यादितः फलकर्मकाऽऽहरणफलकं यानमित्यादिक्रमेण बोधः। यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले प्रविशपिण्डीमित्यादौ तस्यैव पदस्य सकलवाक्यार्थशक्तत्वं तथा प्रकृतेऽस्य समुदायस्याऽऽहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलादिति बोध्यम्। सूत्र स्थानिन इत्युक्त्या तुमुनः प्रयोगे न चतुर्थी। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति दिक् ।।

ननु 'नमः स्वस्ती' त्यनेन नमः शब्दयोगे चतुर्थीविधानान्नमस्करोति देवानित्यादौ नमः शब्दयोगे चतुर्थी कुतोनेत्याशङ्कां समाधत्ते- उपपदविभक्तेरिति। सहयुक्तेऽप्रधाने इति सूत्रस्थभाष्ये प्रधाने प्रथमां साधितुमप्रधानग्रहणं प्रत्याख्यातुञ्च वचनरूपेण पठितेयम्। नमः स्वस्तीत्यत्रत्ययोगग्रहणेन ज्ञापितेयमित्याहुः केचित्। क्रिया कारकयोः सम्बन्धोऽन्तरङ्गस्तन्निनिमित्तिका विभक्तिरन्तरङ्गा, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्तिका विभक्तिरपि बहिरङ्गेत्येतन्मूलिकेयमित्याहुः कैयटादयस्तन्न। नमस्करोति देवानित्यादौ क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशंक्याऽनया वारणस्य भाष्योक्तस्याऽसङ्गत्यापत्तेः। कारकविभक्तित्वञ्च क्रियाजनकत्वसमानाऽधिकरणकर्त्रादिषट्काऽन्यतमत्वम् (अभिहिते प्रथमे) ति वार्त्तिकस्वारस्यादन्याऽभिहिताऽनुद्धृतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपीति तस्या अपि कारकविभक्तित्वमित्यवसेयम्। यथा द्वावित्यादौ द्विशब्दादौविभक्तेश्चैकस्यैव द्वित्वस्य बोधस्तथैव देवदत्तः पचतीत्यादौ उभाभ्यां कर्तृभ्यामेकस्यैव कर्तृत्वस्य बोधो न तु कर्तृत्वबोधाऽऽवृत्तिरिति बोध्यम्। वस्तुतस्तु सूत्रेऽर्थवन्नमः शब्दस्य ग्रहणात्प्रकृतेऽर्थवन्नमः शब्दयोगाऽभावान्न चतुर्थीशङ्काकलङ्ककणिकाऽवसर इति

दिक् ।।

मन्यकर्मण्यनादरे विभाषाऽपाणिषु। अप्राणिष्वित्यस्य प्राणिवर्जेत्यर्थे तच्च मन्यकर्मविशेषणं तथाच, प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे इति तदर्थः। तत्राऽनादर इत्यस्य तिरस्कारोऽर्थः, तथाहि, अनादरो नाऽऽदराऽभावमात्रमपितु अधर्मादाविव नञो विरुद्धवाचित्यात्तिरस्कार इति। तत्राऽनादर इति मन्यकर्मविशेषणम् तेनाऽनादरद्योतके मन्यतेः कर्मणीत्यर्थः फलितः। तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेत्यत्र गृह्यते नत्वपकृष्टसादृश्यरूपः तत्प्रीतिश्च नञ्समभिव्याहार एवेत्यलम्।। इति चतुर्थी।।

## इत्थमपि विमर्शः सम्प्रदानत्व विवेचनम्

'कर्मणा यमभिप्रैति स संप्रदानम्' इति पाणिनिसूत्रम्। तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यं संबन्धीकर्तुमभिप्रैति कर्ता स संप्रदानमिति सूत्रार्थः। एवं च—

**करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम्।**

इति पर्यवसितम्। ग्रामं गच्छतीत्यत्र गमनकर्मजन्य-फलभागित्वेनोद्देश्यत्वस्य चैत्रादौ सत्त्वात् चैत्रादेस्तत्क्रियासंप्रदानत्वाभावात् तद्वारणाय करणीभूतेति। तत्र गमने ग्रामस्याकरणत्वात्। दानादौ च गवादि देयादिकमेव करणमिति लक्षणसमन्वयः। विप्राय गां ददातीत्यादौ जन्यफलप्रकारकेच्छापूर्वकत्वं चतुर्थ्यर्थः। व्युत्पत्तिवैचित्र्याच्च तदेकदेशे जन्यत्वेऽप्रकृत्यर्थस्यापि कर्मणो गवादेर्निरूपकतासंबन्धेनान्वयः। स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नस्त्यागो ददात्यर्थः। कृतिराख्य-यातार्थः। एवं च विप्रविषयकगोजन्य-फलप्रकारकेच्छापूर्वकगो-वृत्तिस्वस्वत्वध्वंसपूर्वकपरस्व-त्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमा-नित्यन्वयधीः।

पितृस्वर्गमुद्दिश्य कृते गोदाने च दानजन्यफलभागित्वेन पिता उद्देश्यो न तु गोजन्यफलभागित्वेनेति पित्रादेर्न संप्रदानत्वम्। यदि च दत्तो गौः पितुः स्वर्गमुत्पादयिष्यतीत्यभिसंधिः तदा अदृष्टाद्वार-कतादृशकर्मजन्यत्वं वाच्यम्।

केचित्तु धात्वर्थतावच्छेदकत्वेन फलं विशेष्यं, निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः स च धात्वर्थतावच्छेदके फलेऽन्वेति, इत्थं च विप्रनिरूपित-

त्वेनेच्छाविषयगोवृत्तिस्वस्वत्व-ध्वंसपूर्वकपर-स्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयधीः। जन्यस्वत्वस्य गोवृत्तित्वे लब्धे अर्थात् तज्जन्यत्वं लभ्यत एवेति तादृशगोजन्य-स्वत्वनिरूपकत्वेनोद्देश्यत्वं विप्रस्याक्षतम्।-

एवं वृक्षायोदकं सिञ्चति इत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः। वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। स च धात्वर्थतावच्छेदकतावच्छेदक-संयोगान्वयी। वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यक्रियायाम्। एवं च वृक्षवृत्तित्वेनेच्छाविषयसंयोगानुकूलजलवृत्तिद्रवद्रव्यक्रियावच्छिन्नव्यापारानुकूल-कृतिमानित्यन्वयबोधः।-

न चैवं सिञ्चधात्वर्थतावच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षमासिञ्चतीति प्रयोगो न स्यात्, तादृशक्रियाया वृक्षावृत्तित्वादिति वाच्यम्। तत्र संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोग एव वृक्षवृत्तित्वान्वयात्। द्रवद्रव्यसंयोग एव तत्र धात्वर्थ इति न युक्तम्। तथा सति फलावच्छिन्नव्यापाराबोधकत्वेन धातोरकर्मकत्वे धात्वर्थतावच्छेदकफलशालित्वाभावेन वृक्षादेरकर्मत्वापत्तेः। अत एवाजां ग्रामं नयतीतिवन्न द्विकर्मकत्वं संयोगावच्छिन्नव्यापारर्थकत्वे च तादृशक्रियायामेव द्वितीयार्थवृत्तित्वान्वयात्तत्क्रियावच्छेदकसंयोगे च चतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयात्। फलबलेन तथैव व्युत्पत्तिकल्पनात्। नचैवमजा नयति ग्राममित्यादौ ग्रामस्य संप्रदानत्वापत्तिः। तत्र हि संयोगावच्छिन्नगमनानुकूलव्यापारः प्रेरणादिर्धात्वर्थः। द्वितीयाद्वयस्य वृत्तित्वमर्थः। धात्वर्थतावच्छेदकगमनैकदेशे संयोगे ग्रामपदोत्तरद्वितीयार्थस्य, गमने चाजापदोत्तरद्वितीयार्थस्य वृत्तित्वस्यान्वयः। एवं च ग्रामवृत्तिसंयोगजनकाजावृत्तिगमनावच्छिव्यापारानुकूलकृतिमानित्यन्वयधीः। तथा चाजाजन्यफलभागित्वेनोद्देश्यत्वेन ग्रामस्याप्रत्ययात् न संप्रदानता।-

यत्र तु तथोद्देश्यत्वं विवक्ष्यते तदा ग्रामायाजां नयतीति प्रयोगो भवत्येवेत्याहुः।

वस्तुतस्तु त्यक्तुस्त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम्। त्यागविशेषश्चात्र ग्राह्यः। तेन विक्रयादौ कर्त्रादैर्न संप्रदानता। श्राद्धादौ पित्रादेर्न स्वत्वभागित्वेनोद्देश्यत्वं, किंतु प्रीतिभागितयेति। अत एव संप्रदाने चतुर्थ्यसंभवात् नमः स्वस्तीत्यादिना सूत्रान्तरेण चतुर्थीविधानम्। रुद्राय गां ददातीत्यादौ रुद्रादेः स्वत्वभागित्वेनोद्देयत्वम्। एवं कर्मणेत्यादिसूत्रमप्येतत्परतयैव

व्याख्येयमिति कर्मणा दानकर्मणा यमभिप्रैति स्वत्वभागित्वेनोद्देश्यीकरोति तत्संप्रदानमिति। एवं च संप्रदीयतेऽस्मा इति व्युत्पत्त्या संप्रदानसंज्ञाप्यन्वर्थैव।

वृक्षायोदकमासिञ्चतीत्यादौ संप्रदानप्रयोगो गौणः चतुर्थीप्राप्त्यर्थः। अत एव शत्रवेऽस्त्रं मुञ्चति मित्राय दूतं प्रेरयतीत्यादौ धात्वर्थतावच्छेदक-फलोद्देश्यत्वाभावेऽपि चतुर्थीप्रयोग उपपद्यते। विभागानुकूलव्यापारो मोचनम्। गमनानुकूलव्यापारश्च प्रेषणम्। तदवच्छेदक-विभागगमनादिशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वात्। तथाच तत्र तत्र उदकादिजन्यफलपल्लवादि-शस्त्रजन्यदुःखादि-दूतजन्यवार्ताज्ञानादिफल-शालिवेनोद्देश्यत्वमेव गौणश्चतुर्थ्यर्थः।

न चैवं गुरुप्रीतिमुद्दिश्य गुरुपुत्राय दत्ते गुरवे ददातीति स्यात्। तथा विवक्षायामिष्टत्वात्। अत एव यत्र रजकसंबन्धित्वमात्रं तात्पर्यविषयस्तत्र रजकस्य वस्त्रं ददातीति प्रयोगः। यत्र वस्त्रजन्यफलभागित्वेनोद्देश्यत्वं तात्पर्यविषयः तत्र रजकाय वस्त्रं ददातीति प्रयोगो भवत्येव।

न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागितया उद्देश्यत्वाद्गौण-संप्रदानत्वेन संप्रदाने चतुर्थ्यैवोपपत्तेः नमः स्वस्तीत्यादिसूत्रान्तरं वयर्थमिति वाच्यम्, यत्किंचितक्रियाकर्म-जन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसंप्रदानत्वेन नमःपदादेः क्रियावाचित्वाभावेन पृथक्सूत्रप्रणयनात्।

नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु नारदादेर्न संप्रदानता किंतु 'रुच्यर्थानां प्रीयमाणः' **'धारेरुत्तमर्ण'** इति सूत्रद्वयेन संबन्धमात्रे चतुर्थी विधीयते। तत्र चतुर्थ्या संबन्धो धातुना रुचिराख्यातेन विषयताभिधीयते। नारदस्य रुचिविषयः कलहः इत्याद्यस्यः, पुनर्दानमङ्गीकृत्य द्रव्यग्रहणं धारणं, वैश्यः शतकर्मकतादृशग्रहणाश्रय इति चान्त्यस्यान्वयधीः।

संप्रदानस्य कारकत्वं धात्वर्थतावच्छेदकफलनिष्पादकत्वेन ददस्वेत्यनुम-तिप्रकाशनेन कर्तुरिच्छामुत्पाद्य दाननिष्पादनेन वेति।

त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं संप्रदानत्वम्। श्राद्धादौ पित्रादेर्न स्वीकारः। रुद्राय गां ददातीत्यादावपि संप्रदानत्वं गौणमुद्देश्यव-रूपमित्यप्याहुः।।

अपिच विशेषः 'कर्मणा यमभिपैति स संप्रदानम् ' इति पाणिनिसूत्रम्। तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यमभिप्रैति (तत्क्रियातत्क्रियाप्रयोजनके-च्छान्यतर) फलभागित्वेनोद्देश्यीकरोति स संप्रदानमिति सूत्रवाक्यार्थः।

**करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम्।**

इति फलितम्। ग्रामं गच्छतीत्यादौ गमनकर्मग्रामजन्यसुखभागित्वे-नोद्देश्यस्य चैत्रादेस्तत्क्रियायां संप्रदानत्वाभावात्तद्वारणाय करणीभूतेति। गमनक्रियाया ग्रामस्याकरणत्वान्न दोषः। दानादौ देयादिकं करणमिति प्रकृतसंगतिः।

पितृस्वर्गोद्देशेन कृतगोदानस्थले दानजन्यफलभागित्वेननैव पितोद्देश्यः, नतु गोजन्यफलभागित्वेनेति न पित्रादेः संप्रदानत्वम्। अत एव पित्रे गां ददातीति न प्रयोगः। यदि चादृष्टद्वारा गोजन्यत्वं फले दत्तो गौः पितुः स्वर्गमुत्पादयिष्यतीति चाभिसंधिस्तदा फले कर्मजन्यत्वमदृष्टाद्वारकं ग्राह्यम्। अत एव न स्वस्मिन्स्व-कर्तृकदानसंप्रदानत्वापत्तिः, न वा चैत्रश्चैत्राय गां ददातीति प्रयोगप्रसङ्गः।

वस्तुतो धात्वर्थतावच्छेदकत्वेन फलं विशेष्यम्। पितुः स्वर्गादिकं न तथेत्यदोषः। इत्थं च विप्राय गां ददातीत्यत्र संबन्धित्वेन परेच्छाविषयत्वं चतुर्थ्यर्थः। चैत्राय चैत्रो ग्रामं गच्छतीत्यादिवारणाय परेति। स च धात्वर्थतावच्छेदकफलेऽन्वेति। वृत्तित्वं द्वितीयार्थः। तथा च विप्रसंबन्धित्वेन परेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलत्यागानुकूल-कृतिमानित्यन्वयधीः।

यत्तु अत्र जन्यफलप्रकारकेच्छापूर्वकत्वं क्रियान्वयि चतुर्थ्यर्थः। व्युत्पत्तिवैचित्र्याच्च तदेकदेशे जन्यत्वे कर्मणो गवादेर्निरूप-कत्वसंबन्धेनान्वयः। तथा च विप्रविषयकगो (निरूपित) जन्य-फलप्रकारकेच्छापूर्वं गो-वृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूलत्या-गानुकूलकृतिमानित्यन्वयधीरिति तन्न, गोजन्यफलस्य प्रकृते स्वत्वरूपतया विप्रविषयिका या गोजन्यफलप्रकारकेच्छा तत्पूर्वकत्वस्य दानेऽसंभवात् तादृशेच्छाया एव दानत्वात्, गौरवाच्चेति दिक्।

एवं वृक्षायोदकमासिञ्चतीत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्न-व्यापारो धात्वर्थः। वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। स च धात्वर्थतावच्छेदकतावच्छेदके संयोगेऽन्वेति। वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यक्रियायाम्। एवं च वृक्षवृत्तित्वेनेच्छाविषयसंयोगानुकूलोदक-वृत्तिद्रवद्रव्यक्रियानुकूल-व्यापारानुकूलकृतिमानित्यन्वयधीरिति। अत्र क्रियान्तस्य धात्वर्थत्वे वृक्षस्य कर्मत्वं स्यात्। न तु जलस्य। क्रियाया वृक्षापेक्षयैव

परसमवेतत्वात्। न चैवं पयसा वृक्षमासिञ्चतीति न स्यात्, धात्वर्थताऽवच्छेदकक्रियाया वृक्षावृत्तित्वादिति वाच्यम्। अत्र क्रियान्तस्य धात्वर्थतया धात्वर्थतया धात्वर्थतावच्छेदकद्रवद्रव्यसंयोगस्य वृक्षवृत्तित्वात्। द्रवद्रव्यसंयोग एवात्र धात्वर्थ इति तु न युक्तम्। तर्हि फलावच्छिन्नव्यापाराबोधकत्वाद्धातोरकर्मकत्वं, धात्वर्थतावच्छेदकफल-शालित्वाभावाद्वृक्षादेरकर्मत्वं च स्यात्।

अत्राजां ग्रामं नयतीतिवद्द्विकर्मकत्वं स्यादिति नाशङ्कनीयम्। क्रियान्तार्थत्वे (धात्वर्थतावच्छेदक) फलद्वयाभावात्, तादृशक्रियानुकूलव्या-पारार्थत्वे च क्रियायामेव द्वितीयार्थवृत्तित्वान्वयात्। क्रियावच्छेदकसंयोगे तु वृक्षायेत्यादिचतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयो न द्वितीयार्थस्य, व्युत्पत्तिवैत्र्यात्। चतुर्थीसमभिव्याहृतस्यैव सिचधातोस्तादृशव्यापारार्थत्वात्। अत एवाजां ग्रामं नयतीत्यत्र ग्रामस्य न संप्रदानत्वम्। अत्र हि संयोगावच्छिन्नक्रियानुकूलव्यापारः प्रेरणादिर्धात्वर्थः, द्वितीयार्थो वृत्तित्वम्। संयोगे तु ग्रामपदोत्तरद्वितीयार्थः क्रियायामजापदोत्तरद्वितीयार्थोऽन्वेति। तथैव व्युत्पत्तेः। तादृशफलभागित्वेन ग्रामादेरनुद्देश्यत्वान्न संप्रदानता। तथोद्देश्यत्वविवक्षायां ग्रामायाजां नयतीति भवत्येवेति दिक्।

परे तु त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम्। त्यागोऽत्र विलक्षणो ग्राह्यः। तेन विक्रयादौ क्रेत्रादेर्न संप्रदानत्वम्। कर्मणा दानकर्मणा यमभिप्रैति स संप्रदानमिति 'कर्मणा' इत्यादिसूत्रार्थः। अत एव संप्रदीयतेऽस्मै इति संप्रदानसंज्ञान्वर्थैव। श्राद्धादौ पित्रादेर्न स्वत्वभागित्वेनोद्देश्यत्वं किंतु प्रीतिभागितयेति संप्रदानत्वाभावेन संप्रदानचतुर्थ्यसंभवात् 'नमः स्वस्ति' इत्यादिना सूत्रान्तरेण तत्र चतुर्थी।-

एवं वृक्षायोदकमासिञ्चतीत्यादौ वृक्षादौ संप्रदानप्रयोगो गौणः चतुर्थीप्रात्यर्थः। अत एव शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रोषयतीत्यादौ धात्वर्थातवच्छेदकफलभागित्वेनोद्देश्यत्वाभावेऽपि चतुर्थी। विभागानुकूलक्रियानुकूलव्यापारो मोचनम्। संयोगानुकूलक्रियानुकूलव्यापारः प्रेषणमिति धात्वर्थतावच्छेदकक्रियावच्छेदकसंयोगविभागरूपफलशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वम्। इत्थं चोदकादिजन्यफलपल्लवाद्यस्त्रादि-जन्यदुःखादिदूतजन्यवार्ताज्ञानादि फलशालि-त्वेनोद्देश्यत्वमेव गौणं

वृक्षायेत्यादिचतुर्थीत्रयार्थः।-

न च गुरुप्रीत्युद्देशेन गुरुपुत्राय दत्ते गुरवे ददातीति स्यात्, तथा विवक्षायामिष्टत्वात्। अत एव रजकसंबन्धित्वस्य तात्पर्यविषयत्वे रजकस्य वस्त्रं ददातीति प्रयोगः। वस्त्रजन्यफलभागित्वेनोद्देश्यत्वस्य तत्त्वे तु रजकाय वस्त्रं ददातीति भवितव्यम्।-

न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागित्वेनोद्देश्यत्वात् संप्रदानचतुर्थ्यैवोपपत्तेः 'नमः स्वस्ति' इत्यादि सूत्रान्तरं व्यर्थम्। यत्किंचित्क्रिया (कर्म) जन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसंप्रदानत्वरूपतया नमः पदार्थादेः क्रियात्वाभावेन पृथक्सूत्रप्रणयनात्।-

नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु न नारदादेः संप्रदानता किंतु 'रुच्यर्थानां प्रीयमाणः', 'धारेरुत्तमर्णः' इति सूत्राभ्यां संबन्धमात्रे चतुर्थी। तथा च चतुर्थ्या संबन्धो धातुना रुचिराख्यातेन विषयता बोध्यत इति नारदस्य रुचिविषयः कलह इत्याद्यस्यः, पुनर्दानमङ्गीकृत्य द्रव्यग्रहणं धारणं, वैश्यस्य शतकर्मकतादृशग्रहणाश्रय इत्यन्त्यस्यार्थः।

संप्रदानस्य कारकत्वं धात्वर्थतावच्छेदकफलनिष्पादकत्वेन ददस्वेत्यनुमतिप्रकाशनेन दातुरिच्छामुत्पाद्य दानसंपादनेन वेत्याहुः।

परे तु त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं संप्रदानत्वम्। श्राद्धादौ पित्रोदर्न स्वीकारः। रुद्राय गां ददातीत्यादावपि गौणसंप्रदानत्वमुद्देश्य-त्वरूपमित्याहुः।

"कर्मणा यमभिप्रैति स संप्रदानम् " इति पाणि निसूत्रम् । तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यमभिप्रैति फलभागित्वेनोद्देशीकरोति स संप्रदानमिति वाक्यार्थः। करणीभूतकर्मजन्यफलभागित्वेनाद्देश्यत्वं संप्रदानत्वमिति फलितम्। ग्रामं गच्छतीत्यादौ गमनकर्मग्राम-जन्यसुखभागित्वेनोद्देश्यस्य चैत्रादेस्तत्क्रियायां संप्रदानत्वाभावात्तद्वारणाय करणीभूतेति। गमनक्रियायां ग्रामस्याकरणत्वान्न दोषः। दानादौ देयादिकं करणमिति प्रकृतिसंगतिपितृस्वर्गोद्देश्येन कृतगोदानस्थले दानजन्यफलभागित्वेनैवपितोद्देश्यः -नतुगोजन्यफलभागित्वेनेति न पित्रादेः संप्रदानत्वम् । अत एव पित्रे गां ददातीति न प्रयोगः। यदि चादृष्टद्वारादत्ता गौः पितुः स्वर्गमुत्पादयिष्यतीत्यभिसंधिस्तदा फले कर्मजन्यत्वमदृष्टद्वारकं ग्राह्यम् । अत एव न स्वस्मिन्स्वकर्तृकदानसप्रदानत्वापत्तिः। न वा चैत्रश्चैत्राय गां ददाति

प्रयोगप्रसंगः। वस्तुतो धात्वार्थतावच्छेदकत्वेन फलं विशेष्यम्। पितुः स्वर्गादिकं न तथेत्यदोषः। इत्थं च विप्राय गां ददातीत्यत्र संबंधित्वेन परेच्छाविषयत्वं चतुर्थ्यर्थः चैत्राय चैत्रो ग्रामं गच्छतीत्यादिवारणाय परेति। स च धात्वर्थतावच्छेदकफलेऽन्वेति। वृत्तित्वं द्वितीयार्थः। तथा च गोवृत्तिस्वस्वत्वध्वंसविप्रसंबंधित्वेन परेच्छाविषयपूर्वकपरस्वत्वानुकूल-त्यागानुकूलकृतिमानित्यन्वयधीः। यत्तु अत्र जन्यफलप्रकारकेच्छापूर्वकत्वं क्रियान्वयि चतुर्थ्यर्थः। व्युत्पत्तिवैचित्र्याच्च तदेकदेशे जन्यत्वे कर्मणो गवादेर्निरूपितत्व-संबंधेनान्वयः। तथा च विप्रविषयकगोनिरूपित-जन्यफलप्रकारकेच्छापूर्वक-गोवृत्तिस्वस्वत्वध्वंसपर-स्वत्वानुकूलत्यागानुकूल-कृतिमानित्यन्वयधीरिति। तन्न, गोजन्यफलस्य प्रकृते स्वरूपतया विप्रविषयिका या गोजन्यफलप्रकारकेच्छा तत्पूर्वकत्वस्य दानेऽसंभवात्। तादृशेच्छाया एव दानत्वात् , गौरवाच्चेति दिक् । एवं वृक्षायोदकमासिंचतीत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। स च धात्वर्थतावच्छेदके संयोगेऽन्वेति। वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यकियायाम्। एवं च वृक्षवृत्तित्वेनेच्छाविष-संयोगानुकूलद्रवद्रव्यवृत्ति-क्रियानुकूलव्यापारानुकूल-कृतिमानित्य-न्वयधीरिति। अत्र क्रियांतस्य धात्वर्थत्वे वृक्षस्य कर्मत्वं स्यात्। न तु जलस्य। क्रियाया वृक्षक्षयैव समवेतत्वात्। न चैवं पयसा क्षमासिंचतीत्यादौ कर्मत्वं न स्यात्। धात्वर्थताऽवच्छे दकक्रियाया वृक्षावृत्तित्वादिति वाच्यम्। अत्र क्रियांतस्यधात्वर्थतया धात्वर्थतावच्छेदकद्रवदव्यसंयोगस्य वृक्षवृत्तित्वाद्द्रव्यसंयोग एव धात्वर्थ इति न युक्तम्। तर्हि फलावच्छिन्नव्यापाराबोधकत्वाद्धातोरकर्मकत्वम्। धात्वर्थतावच्छेदक फलशालित्वाभावात् वृक्षादेरकर्मकत्वं स्यात्। अत्राजां ग्रामं नयतीतिवद्द्विकर्मकत्वं स्यादिति नाशंकनीयम्। क्रियांतार्थत्वे धात्वर्थतावच्छेदकफलद्वयाभावात्। तादृशक्रियानुकूलव्यापारार्थत्वे च क्रियायामेव

द्वितीयार्थवृत्तित्वान्वयात् । क्रियावच्छेदकसंयोगे तु वृक्षायेत्यादिचतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयः न द्वितीयार्थस्य। व्युत्पत्तिवैचित्र्यात्। चर्तुर्थीसमभिव्याहृतस्य सिचधातोस्तादृशव्यापारार्थत्वात्। अत एवाजां ग्रामं नयतीत्यत्र ग्रामस्य न संप्रदानत्वम् । अत्र हि संयोगावच्छिन्नक्रियानुकूलव्यापारः प्रेरणधात्वर्थः, द्वितीयार्थो वृत्तित्वम्। संयोगे तु ग्रामपदोत्तरद्वितीयार्थः क्रियायामजापदोत्तरद्वितीयार्थेऽन्वेति। तथैव व्युत्पत्तेः। तादृशफलभागित्वेन ग्रामादेरनुद्देश्यत्वान्न संप्रदानता। तादृशफलभागित्वेनोद्देश्यत्वे तु उद्देश्यत्वविवक्षायां ग्राममजां नयतीति भवत्येवेति दिक् ॥ परे तु त्यज्यमानद्रव्यस्य त्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम् । त्यागोऽत्र विलक्षणो ग्राह्यः। तेन विक्रयादौ क्रेत्रादेर्न संप्रदानत्वम् । कर्मणा दानकर्मणा यमभिप्रैतिससंप्रदानमिति 'कर्मणा' इत्यादिसूत्रार्थः। अत एवदीयतेस्मै इति संप्रदानसंज्ञान्वर्थैव। श्राद्धादौपि त्रादेः स्वत्वभागित्वेनोद्देश्यत्वम् । किंतु भागितयेति संप्रदानत्वाभावेन संप्रदानचतुर्थ भवात्। 'नमः स्वस्ति' इत्यादिना सूत्रांतेऽत्र चतुर्थी। एवं वृक्षायोदकमासिंचतीत्यादौ नप्रयोगो गौणः चतुर्थीप्राप्त्यर्थः। अत एव मुंचति, मित्राय दूतं प्रेषयतीत्यादौ धात्वर्थ फलकफलभागित्वेनो-देश्यत्वाभावेऽपिचतुर्थीप्र गानुकूलक्रियानुकूलव्यापारो मोचनम्। ससंदानुकूलक्रियानुकूलव्यापारः प्रेषणमिति धात्वर्थतावच्छेदकरूपफलजन्यफलशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वम् । इत्थं चोदकादिजन्यफलपल्लवाद्यजन्यदुःखादिदूतजन्यवार्ताज्ञानादिफलशालित्वेनोद्देश्यत्वमेव वृक्षायेत्यादिचतुर्थीत्रयार्थः। न च गुरुप्रीत्युद्देश्येन गुरुपुत्राय दत्तायां गविगुरवे गां ददातीति स्यात् , तथा विवक्षाया मिष्टत्वात् । अत एव रजकसंबंधिनस्तस्य तात्पर्यविषयत्वे रजकस्य वस्त्रं ददातीति प्रयोगः। वस्त्रजन्यफलभागित्वेनोद्देश्यत्वस्य तत्त्वे तु रजकाय वस्त्रं ददातीति भवितव्यम् । न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागित्वेनोद्देश्यत्वात्। संप्रदानचतुर्थ्यैवोपपत्तेः "नमः स्वस्ति" इत्यादि सूत्रांतरं व्यर्थम् । यत्किंचित्क्रियाकर्मजन्य-

फलशालित्वेनोद्देश्यत्वस्यैव गौणसंप्रदानत्वरूपतया नमः पदार्थादेः क्रियात्वाभावत्वेन पृथक्सूत्रप्रणयनात्। नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु न नारदादेः संप्रदानता किंतु "रुच्यर्थानां प्रीयमाणः", "धारेरुत्तमर्णः" इति सूत्राभ्यां संबंधमात्रे चतुर्थी। तथा च चतुर्थ्या संबंधो धातुना रुचिराख्यातेन विषतया बोध्यत इति। नारदस्य रुचिविषयः कलह इत्याद्यस्य। पुनर्दानमुंगीकृत्य द्रव्यग्रहणं धारणं वैश्यस्य शतकर्मकतादृशग्रहणाश्रय इत्थं तस्यार्थः संप्रदानस्य कारकत्वं धात्वर्थतावच्छेदकस्वत्वनिष्पादकत्वेन ददस्वेत्यनुमितिप्रकाशनेन दातुरिच्छामुत्पाद्य दानसंपादनेनैवेत्याहुः। परे तु त्यागजन्यस्व-त्वजनकस्वीकारकत्वं संप्रदानत्वम्। श्राद्धादौ पित्रादेर्न स्वीकारः। रुद्राय गां ददातीत्यादावपि गौणसंप्रदान-त्वमुद्देश्यत्वरूपमित्याहुः।

।। इति संप्रदानम् ।।

ध्रुवमपायेऽपादानम्। ध्रुगतिस्थैर्य्ययोरित्यस्मात्कुटादेः पचाद्यचि, ध्रुव स्थैर्य्ये इति पाठे तु इगुपधलक्षणे के वा निष्पन्नस्य ध्रुवशब्दस्य स्थैर्यार्थकत्वम्। विभागजनकव्यापारोऽपायशब्दार्थः। तथा च, विभागजनकव्यापारे ध्रुवं स्थिरं उक्तव्यापाराऽनाश्रयमिति यावत् यत्तदपादानंसञ्ज्ञकं भवतीति सूत्रार्थः। भाष्ये माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितमपादानमाश्रित्यैव पञ्चमी साधनेन बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि विभागो गृह्यते न केवलो वास्तवसम्बन्धपूर्वको वास्तव एवेति बोध्यम्। तथा च प्रकृतधातूपात्तविभागजनकव्यापाराऽनाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयत्वमपादानत्वमिति फलितम्। सूत्रे ध्रुवग्रहणाऽभावे पचत्यादियोगे कर्तृसंज्ञायाश्चारितार्थ्येन, अपायविषये यत्कारकं तदपादानमित्यर्थसम्भवेनाऽपादानसंज्ञायाः कर्तृसंज्ञाऽपवादत्वेन कर्तुरपादानत्वाऽऽपत्तिरिति तद्व्यावृत्त्यर्थं ध्रुवग्रहणमित्यवसेयम्। उक्तञ्च हरिणा, अपाये यदुदासीनं चलं वा यदि वाऽचलम्। ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते इति कैयटादयः॥

शेखरकृतस्तु, उक्तरीत्या ध्रुवपदस्य निश्चलार्थकत्वेन त्रस्तादश्वात्पतति धावतोऽश्वात्पततीत्यादौ त्रासधावनाऽऽश्रयत्वेनाऽनिश्चलत्वाद्ध्रुवत्वाऽभावेनाऽश्वस्याऽपादानत्वं न स्यादिति पूर्वपक्षं विधायाऽत्राऽध्रौव्यमविवक्षितं यतः सतोऽप्यविवक्षा भवतीति समाहितम्भाष्ये। अत्र पतधात्वर्थव्यापाराऽश्रयत्वरूपत्वादुक्ताऽध्रुवत्वस्याऽसत्त्वेन सतोऽध्रौव्यस्याऽविवक्षेति भाष्योक्ति रसङ्गतिमापद्येत। सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनस्यैवोचित्येन भाष्योक्तस्याऽसङ्गतिः। लोकसिद्धनिश्चलाऽतिरिक्तेऽर्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च। नचाऽन्यविधध्रुवत्वाऽभ्युपगमे अतंदावेशादिति हरिकारिकाया असङ्गतिरिति वाच्यम्। तत्राऽतदावेशादित्यस्य तदावेशाऽविवक्षणादित्यर्थेन तत्सङ्गतेः। अतोऽपाये गतिविशेषे सति यत् ध्रुवमवधिभावोपगमाश्रयत्वे सति अवधिभावोपगमातिरिक्तस्या-ऽवधित्वोपयोगिव्यापारस्याऽनाऽऽश्रयं तदपादानमिति सूत्रार्थः। त्रासादेरवधित्वोपयोगित्वाऽऽ-श्रयणादश्वस्याऽपादानत्वं न स्यादिति पूर्वपक्षः। वृक्षात्पर्णं पततीत्यादौ त्रासादेरसत्त्वान्न तस्याऽवधित्वो-पयोगित्वमिति समाधानम्। वृक्षस्य पर्णं पततीत्यादौ वृक्षस्य पर्णद्वारा पातजनकत्वेन प्राप्ताऽपादानत्वव्यावृत्त्यर्थं ध्रुवमपाये इति। सत्येवं अपायपदं कारके इत्यस्य क्रियाजनकत्वेन विवक्षित इत्यर्थे तात्पर्य्यग्राहकं बोध्यम्। ननु मेषपदोपात्तयोरेव

परस्परशब्दार्थत्वात्तयोरवधिभावो-पगमातिरिक्तव्यापाराऽनाश्रयत्वाऽभावेन परस्परान्मेषावपसरत इत्यत्राऽपादानत्वाऽनुपपत्तिरिति चेन्न। वाचकशब्दरूपोपाधिगतभेदस्य वाच्याऽर्थे आरोपात्तयोरप्यर्थयोर्भेदेन तदुपपत्तेः। त्रासाऽऽश्रयाऽभिन्ना-ऽश्वाऽपादानिका देवदत्तकर्तृवृत्तिपतनक्रियेति प्रथमवाक्याद्बोधः। धावनकर्त्रभिन्नाश्वापादानिकादेवदत्तकर्तृवृत्तिः पतनक्रियते द्वितीयतो बोधः। कुड्यापादानकपातकर्त्रभिन्नाऽश्वाऽपादानिका देवदत्तकर्तृवृत्तिपातक्रियते तृतीयतो बोधः। अन्यतरमेषाऽ-पादानिकान्यतरमेषकर्तृकाऽपसरणक्रियते चतुर्थतो बोधः। ननु विभागाश्रयस्याऽपादानत्वविधानाद्व्यधधात्वर्थे विभागस्य प्रवेशात्तद्योगे धनुषा विध्यतीत्यत्राऽप्यपादानत्त्वं दुर्वारमिति चेन्न। व्यधधातोर्निःसरच्छरजन्यबेधार्थत्वेन तद्योगेऽपादानत्वकरणत्वयोः प्राप्तयोः परत्वात्करणत्वस्यैव प्रवृत्तेः। ननु विभागाऽनुकूलव्यापारस्य त्यजधात्वर्थत्वेन तद्योगेऽप्यपादानत्वप्रसक्तेर्दुर्वारत्वाद्वृक्षं त्यजति खग इति प्रयोगो न स्यादिति चेन्न। तत्र व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वात्कर्मसंज्ञयाऽपादानत्वस्य बाधेन तथा प्रयोगोपपत्तेः। विभागाऽनुकूलव्यापारस्य स्पन्दधात्वर्थत्वेन तद्योगेऽपादानत्वं नाशङ्क्यम्। उक्तधातोर्विभागार्थत्वाऽनङ्गीकारादिति वृक्षे स्पन्दते इत्येव भवति। चलधातोर्विभागार्थत्वत्तद्योगेऽपादानत्वस्य सौलभ्येनाऽऽसनाच्चलित इति प्रयोगो भवत्येव। ननु सार्थस्य धात्वर्थप्रधानव्यापाराश्रय-त्वादपादानत्वाऽप्रसक्तयासार्थाद्धीयते इति प्रयोगो नोपपद्येतेति चेन्न। 'अपादाने चहीयरुहोरि'ति ज्ञापकात्कर्मप्रत्ययान्तहाधातु-प्रयोगेऽपादानत्वस्य ज्ञापनेन तदुपपत्तेः। कर्मसंज्ञायां कर्तृपदस्य स्वतन्त्रोपलक्षणत्वेन कर्मणि लकारे सार्थेन त्यज्यते देवदत्त इत्यर्थ इति दिक् ॥

ननु विभागस्य संयोगपूर्वकविश्लेषरूपत्वेन तस्याऽत्रासत्त्वाद्बुद्धिकृतस्य विभागस्य गौणत्वेनाऽग्रहणाच्च सूत्रेणाऽप्राप्त्या वार्त्तिकमिद-मावश्यकमित्याह-जुगुप्साविरामेति। जुगुप्सा, निन्दा, विरामो विरतिः, प्रमादोऽनवधानता, जुगुप्साद्यर्थकधातूनां प्रयोगेजुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानमिति तदर्थः। तस्यैवं विषयस्य क्रियाजनकत्वरूपकारत्वेनाऽविवक्षायां सम्बन्धित्वेन च विवक्षायां पापस्य जुगुप्सते इति भवत्वेव। एषां धातूनां स्वार्थविशिष्टवौद्धविश्लेषजनकनिवृत्तौ लक्षणया 'अपादाने पञ्चमीत्येव सिद्धौ वार्त्तिकमिदमुत्तरसूत्राणि च नावश्यकानीत्युक्तं भाष्ये॥

भीत्रार्थानां भयहेतुः। भयं भीस्त्राणं त्राः, क्विबन्तावेतौ, धातुनिर्देशे तु व्यधिकरणबहुव्रीहिराश्रयणीयः स्यात्। भीश्च त्राश्च भीत्रौ तावर्थौ येषान्ते भीत्रार्थास्तेषां भीत्रार्थानामित्येतत्फलितमाहभयार्थानामिति। हेतुतृतीयाऽपवादभूतोऽयं योगः। ननु भयार्थक धातुयोगे भयहेतोरपादानत्वविधानात्, कस्य विभ्यति देवाश्च जातरोषस्य संयुगे इति रामायणीयपद्ये कस्येतिभयहेतोरपादानत्वप्रसक्तया ततः कथं षष्ठ्युपपत्तिरितिचेन्न। कस्येत्यस्य संयुगेनाऽन्वयात्तस्य भयहेतुत्वाऽभावेना-ऽपादानत्वाप्रसक्तया तदुपपत्तेः। न च संयुगस्याऽपादानत्वाऽऽपत्तिरिति वाच्यम्। परत्वादधिकरणसंज्ञया-ऽपादानसंज्ञाया बाधेनोक्तापत्तेरयोगात्। अधिकरणत्वा-ऽविवक्षायामिष्टाऽऽपत्तिरेव पञ्चम्या इति बोद्धव्यम्। सूत्रे भीत्रार्थेत्यस्याऽसत्त्वे व्याघ्रं पश्यतीत्यादावपादानत्वाऽऽपत्तिः। न च कर्मसंज्ञयाऽपादानत्वबाधेन नोक्ताऽऽपत्तिरिति वाच्यम्। कर्मत्वाऽविवक्षणे शेषषष्ठीं बाधित्वा पञ्चम्यापत्तेर्दुर्वारत्वादित्यलम्।।

वारणार्थनामीप्सितः। वारणं प्रवृत्तिविधातः सोऽर्थो येषां ते तथोक्तास्तेषां तथोक्तानाम्। ईप्सितशब्दस्य वारणार्थधात्वर्थफलाश्रयोऽर्थः। तथा च, प्रवृत्तिक्रियाप्रतिषेधाऽनुकूलव्यापाररूपवारणार्थकधातुयोगे तत्तत्क्रियाजन्यफलभागित्वेन तत्तत्क्रियाकर्तुरीप्सितस्याऽपादानत्वमिति सूत्राऽर्थः। यवेभ्यो गां वारयतीत्यादौ वारिधात्वर्थ व्यापारजन्य-संयोगादिरूपफलाश्रयत्वाद्यवादीनामपादानत्वात्तेभ्यः पञ्चमी। देवदत्तकर्तृवृत्तिर्गोवृत्तियवप्रतियोगिकविनाशाऽनुकूलभक्षण-रूपव्यापाराऽभावाऽनुकूलो व्यापार इति बोधः। एवं पुष्पेभ्य आतपं नाशयति, परस्वेभ्यः पाणिम्वारयति, कूपादन्धं वारयतीत्यादितः, देवदत्तकर्तृवृत्तिरातपनिष्ठपुष्पवृत्तिशुष्कीभावाऽनुकूलव्यापाराऽभावाऽनुकूल-व्यापार इति बोधः। पाणिनिष्ठपरस्ववृत्तिसंयोगाऽनुकूल-व्यापाराऽलुकूलव्यापारो देवत्तवृत्तिः। अन्धवृत्तिर्यः कूपवृत्यधः प्रदेशाऽवच्छिन्नसंयोगाऽनु-कूलक्रियारूपपतनाऽनुकूलव्यापारस्तदभावाऽनुकूल-व्यापारः कर्तृवृत्तिरिति बोधः। अग्नेर्माणवकं वारयतीत्यतस्तु माणवककवृत्त्यग्निजन्यदाहाऽनु-कूलव्यापाराऽभावाऽनुकूलव्यापारो देवदत्तवृत्तिरितिबोधः।।

अन्तर्द्धौ येनाऽदर्शनमिच्छति। अन्तर्द्धिरन्यकर्तृकस्वकर्म-कदर्शनाऽभावाऽनुकूलव्यवहितदेशस्थितिरूपस्तद्घटकं यत्कर्तृक-

दर्शनाऽभावमिच्छति तदपादानसंज्ञमित्यर्थस्तत्फलितमाह- व्यवधाने सतीति येनेत्यत्र कर्तरि तृतीया। नाऽत्र कृद्योगलक्षणा षष्ठी शङ्कनीया। उभयप्राप्तौ कर्मण्येव तद्विधानात्। प्रत्यासत्त्या आत्मनो गम्यमानत्वादस्त्युभयप्राप्तिरिति भावः। मात्तुर्निलीयते कृष्णः, अत्र मातृकर्तृकस्वकर्मकदर्शनेच्छा कृष्णवृत्तिरिति मातृशब्दादपादानत्वेन पञ्चमी। ननूक्तोदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेऽपिकथमिच्दाया लाभ इति चेन्न। आक्षेपेण तल्लाभात्। अन्तर्द्धौ किमिति। अयम्भावः, सूत्रे तदनुपादाने यत्कर्तृकदर्शनाऽभावमिंच्छति तदपादानमित्यर्थे चोरान्न दिदृक्षते इत्यत्र चोरकर्तृकस्वकर्मदर्शनाऽभावेच्छाया देवदत्तादिवृत्तित्वाच्चोर-शब्दादपादनत्वाऽऽपत्तिः। तदुपादाने तु व्यवधाने सतीत्यस्या-ऽप्यर्थकुक्षिप्रविष्टत्वेन प्रकृते तदभावान्नापत्तिरिति। सूत्रे येनेत्यस्याऽभावे स्वकर्मदर्शनाऽभावंय इच्छति तदपादानमित्यर्थे कर्तुरेवोक्ताऽऽपत्तिस्तत्सत्त्वे तु यत्कर्तृकेत्यर्थघटितोक्तार्थे न कर्तुस्तदापत्तिः। इच्छतिग्रहणाऽभावे यत्र दर्शनाऽभाव एव तत्रैवाऽपादानसंज्ञा स्यात्। तद्ग्रहणसत्त्वे तु अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यप्युक्तसंज्ञा भवतीत्यलम्।।

अन्यारादिति। अत्राऽन्येत्यर्थग्रहणं तेनाऽन्यार्थकशब्दयोगे पञ्चमीति तदर्थः। अन्यार्थश्च भेदाऽऽश्रयो ननु भेदमात्रम्। अत एव घटाद्भिन्न इत्याद्युपपत्तिः। शेखरकारास्तु, 'पञ्चमीविभक्तेरि'त्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् 'धुवमपाये' इति सूत्रे अपायशब्देन भेदस्याऽपि ग्रहणादपादाने पञ्चमीत्येव पञ्चमीसिद्धावन्येत्यर्थ ग्रहणमनादेयमित्याहुः।।

ननु सहाञ्चतीति सध्र्यङित्यत्र पञ्चम्यभावाय दिक्शब्दसाहचर्य्येण दिग्वाचकस्यैवाऽञ्चूत्तरपदकस्य ग्रहणाद्दिकशब्दयोगे पञ्चमीविधाना-देवऽञ्चुत्तरपदकयोगेऽपि पञ्चमीविधानसुलभत्वेन सूत्रे पृथगञ्चूत्तर-पदग्रहणम्व्यर्थमित्यत आह- अञ्चूत्तरपदस्येति।।

प्रभृतियोगे पञ्चमीति। प्रभृत्यर्थप्रयोगेऽपि पञ्चमीति तदर्थः। अपादाने पञ्चमीति सूत्रस्थं भाष्यमेवाऽत्र प्रमाणम्। तत्र हि, यतश्चाऽध्वकालनिर्माणं ततः पञ्चमी कार्त्तिक्याआग्रहायणीमास इति वार्त्तिकं प्रत्याख्यातुमिदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्त्तिक्याः प्रभृत्याग्रहायाणीमास इत्युक्तम्। प्रभृतिशब्दाऽभावेऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेनाऽनेन भाष्येण प्रभृत्यर्थयोगे पञ्चमीति वचनं बोध्यते। अन्यथा प्रभृतिपदाऽ-भावादुक्तवार्त्तिकस्य पञ्चम्यर्थमावश्यकत्वेन

तत्प्रत्याख्यानमसंगतं स्यात्। एवञ्च मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोक इत्यत्र प्रभृत्यर्थकाऽऽरभ्यशब्दयोगेऽपि पञ्चमी। अवीचिमार-भ्येत्यत्राऽऽरभ्येत्यस्य गृहीत्वेत्यर्थेन प्रभृत्यर्थकत्वाऽभावान्न पञ्चमीत्यलम्।।

ननु 'अपपरिबहिरञ्चवः पञ्चम्याः' अत्र सूत्रे परस्परसाहर्य्यादपपर्योर्वर्जनार्थयोः कर्मप्रवचनीयसंज्ञकयोरेव ग्रहणात्तद्योगे 'पञ्चम्यपाङ्परिभिरि'ति पञ्चमीविधानेन (लक्षणप्रतिपदोक्त) परिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणेन च पञ्चम्यैव समासस्य सिद्धत्वात् अपपरिसाहचर्य्यादुक्तपरिभाषया चाऽञ्चूत्तरपेनाऽपि अन्यारादिति विहितपञ्चम्यैव समासस्य सिद्धत्वाच्च पूर्वोक्तसूत्रस्थं पञ्चमीग्रहणं व्यर्थं सत् बहिश्शब्दस्य पञ्चम्यन्तेन समासविधानद्वारा बहिश्शब्दयोगेऽपि पञ्चमी भवतीति ज्ञापयतीत्याह- अपपरिबहिरिति समासविधाना-ज्ज्ञापकाद्बहिर्योगे पञ्मीति। पञ्चम्यन्तेन समासविधाना-ज्ज्ञापकादिति तदर्थः। ज्ञापकसिद्धस्याऽसार्वत्रि-कत्वात्क्वचिद्बहिश्शब्दयोगे षष्ठ्यपि। तेन करस्य करभो वहिरिति सिद्धमिति दिक् ।।

ननु 'पृथग्विनानाने'तिसूत्रेण विकल्पतृतीयाविधानात्तदभावपक्षे 'एनपा द्वितीया' इति प्रकृता द्वितीयैव स्यात्। अस्या वैकल्पित्वे पञ्चम्यपि, अस्याश्च नित्यत्वाद्विभक्तित्रयसमावेशो न स्यादिति तदर्थमन्यतरस्यां ग्रहणस्य समुच्चयार्थकत्वमावश्यकमित्याह- अन्यतरस्यां ग्रहणं समुच्चयार्थमिति।

शेखरकृतस्तु, अत्र सूत्रेऽन्यतरस्यां ग्रहणं न द्वितीयासमुच्चयार्थकत्वं फलाऽभावात्। न च द्वितीयासमुच्चायार्थकत्वे विना वातं विना वर्षं केनेमौ पातितौ द्रुमावित्यत्र द्वितीया भवतीति वाच्यम्। ऋतेशब्दयोगे इव ततोऽन्यत्राऽपि दृश्यते इत्यनेनैव तत्र द्वितीयासिद्धेः। अत्र सूत्रे द्वितीयाया असम्बन्धादेव भाष्यकृता नोक्तो द्वितीयासमुच्चयः। यद्यत्र द्वितीया सम्बन्धः स्यात्तदा 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्ये'ति सूत्रेऽपि पञ्चमीसमुच्चयार्थम्प्रकृताऽन्यतरस्यां ग्रहणस्य सम्बन्धाऽऽवश्य-कत्वात्तत्राऽपि द्वितीया समुच्चयः स्यादिति तद्भावः। पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्येति भाष्यात् 'षठ्यतसर्थप्रत्ययेने'त्यत प्राक् 'एनपा द्वितीये'ति सूत्रमिति सूचितम्। अन्यथा सूत्रपाठक्रमत्यागे न्यायप्राप्तषष्ठीपूर्वनिपाताऽकरणे च न किमपि बीजम्। एवञ्चान्यतरस्यां ग्रहणस्य नैव द्वितीयासमुच्चयार्थ-

कत्वमित्याहुरित्यलम्।। इति पञ्चमी।।

## अपि च अपादानत्वविवेचनम्।

परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्।

वृक्षात्पर्णं पततीत्यादौ पतनाश्रयस्य पत्रादेरपादानत्ववारणाय पर कीयेति। अत्र पञ्चम्या विभागजनकत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं चाभिधीयते। विभागे अन्योन्याभावे च वृक्षोऽधिकरणत्वेनान्वीयते। एवं च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगिता-वच्छेदकपतनाश्रयः पत्रमित्यन्वयधीः।

अत्र च धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः। तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वम्।

यत्तु विभागावच्छिन्नक्रियायाः त्यजधत्वर्थतया विभागे विशिष्टक्रियाया जनकत्वाभावान्न तत्र तथेति। तदसत्। तथा सत्यधःसंयोगावच्छिन्नक्रियाया एव पतधात्वर्थतया वृक्षपर्णविभागे पर्णाधःसंयोगस्याजनकत्वादसंभवापत्तेः। तदुपलक्षितजन्यत्वं चोभयत्र समानमिति।

एवं च ग्रामाद्गच्छतीत्यादौ गमनादिजन्यविभागाश्रयत्वेन ग्रामादेरपादानत्वम्। **'ध्रुवमपायेऽपादानम्'** इति पाणिनिसूत्रम्। अपाये विभागे ध्रुवं निश्चलं तद्विभागजनकक्रियाशून्यमिति तदर्थः। धावतोऽश्वात्पततीत्यादौ तु पञ्चमी नैतत्सूत्रेणानुशिष्टा तदर्थं वक्तव्यान्तरं विधेयम्।

वस्तुतस्तु विभागजनकत्वं यत्र क्रियायान्वीयते तत्क्रियाशून्यत्वमर्थः। तेन धावतोऽश्वात्पततीत्यादौ न काप्यनुपपत्तिः। तत्र पतनक्रियायामेव पञ्चम्यर्थविभागजनकत्वान्वयेनाश्ववृत्तिधावनक्रियायां तदनन्वयादिति।

विभागे ध्रुवमवधिभूतमपादानमित्यर्थः। अवधित्वं च स्वरूपसंबन्धविशेषःप्रतीतिबलात्। तेन धावतोऽश्वात्पततीत्यादौ सक्रियाश्वादेरपादानत्वं नानुपपन्नम्। अत एव वृक्षपर्णयोः क्रियया पत्रस्य विभागेऽपि वृक्षस्यावधित्वोपपत्तिरिति तु कश्चित्।

वृक्षाद्विभजत इत्यादौ तु विभागावधित्वमपादानत्वमवधित्वमवधिमत्त्वं वा स्वरूपसंबन्धरूपं पञ्चम्यर्थः। एवं च वृक्षाद्यवधिकविभागाश्रयः पर्णमित्यन्वयबोधः। न चैवं स्वस्माद्विभजत इत्यपि स्यादिति वाच्यम्।

स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिश्टविभागाश्रयत्वस्य स्वस्मिन्नभावात्। इत्थं चापादानपदं पञ्चमी च नानार्थमेवेति।

न चैवं परकीयस्पन्दजन्यविभागाश्रयत्वेन वृक्षात्पर्णं स्पन्दत इत्यपि स्यादिति वाच्यम्। परकीयक्रियेत्यत्र क्रियापदेन सकर्मकधात्वर्थस्य विवक्षितत्वात्।

व्याघ्राद्बिभेति शत्रोः परित्रायते इत्यादौ पञ्चमी नापादाने किं तु **'भीत्रार्थानां भयहेतुः'** इति सूत्रेणानुशिष्टायाः पञ्चम्या हेतुत्वमर्थः। धातो-र्यथायथं भयं भयाभावश्चार्थः। पञ्चम्यर्थश्च हेतुत्वं धात्वर्थे भये धात्वर्थतावच्छेदके च भयेऽन्वेति। आख्यातार्थश्चाश्रयत्वं। परित्राणानुकूलव्यापारश्च। इत्थं च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रप्रणयनं तस्यैव प्रपञ्चार्थमिति बोध्यम्। तथा च व्याघ्रहेतुकभयाश्रयः शत्रुहेतुकभया-भावानुकूलव्यापारवानिति चान्वयधीः।

एवं कूपादन्धं वारयतीत्यादौ पञ्चम्याः पतनं, द्वितीयाया धात्वर्थक-देशप्रतिबन्धान्वितं वृत्तित्वं, धातोश्च प्रतिबन्धानुकूलव्यापारोऽर्थः। (आख्यातस्य कृतिः) तथा चान्धवृत्तिकूपपतनप्रतिबन्धानु-कूलव्यापारानुकूलकृतिमानिति वाक्यार्थस्तु न युक्तः, यत्र कूपे कस्यापि पतनमप्रसिद्धं तत्रासंभवात्। अत एव द्वितीयायाः पतनं पञ्चम्या धात्वर्थान्वयिवृत्तित्वं धातोश्चाभावानुकूलव्यापारोऽर्थः। तथा च कूपवृत्त्यन्धपतनाभावानुकूल-व्यापारविषयकयत्नवानित्यर्थोऽपि न युक्तः, यदन्धस्य पतनमप्रसिद्धं तत्रासंभावत्। किं तु धातोरभावानुकूलव्यापारः, पञ्चम्यावृत्तित्वं, द्वितीयायाः प्रतियोगित्वमनुयोगित्वं वा धात्वर्थतावच्छेदकीभूताभावान्वितमर्थः। अभावश्च कूपादिसमभिव्याहारा-दिवशात्पतनादिना संबन्धेन बोध्यः। एवं च पतनादिसंबन्धेन कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयक-यत्नवानित्यन्वयधीः। एवमेतस्मात्सविषान्नदमुं मित्रं वारयतीत्यादौ यत्सविषान्नस्य यन्मित्रस्य भोजनमप्रसिद्धं तत्रापि भोजनादिसंबन्धेन सविषान्नवृत्तिमित्रप्रति-योगिकाभावानुकूलव्यापारविषयकयत्नवानित्यन्वयधीः।

कूपादन्धमित्यत्र सविषान्नादमुं मित्रमित्यत्र च यथायथं पतनं भोजनमभावानुकूलव्यापारश्चार्थः। पञ्चम्याश्च यथायथं द्वितीयार्थकर्तृ-त्वान्वितद्वित्वविशिष्टं वृत्तित्वं कर्मत्वं चार्थः। द्वितीययोः कर्तृत्वमर्थः। धात्वर्थतावच्छेदकीभूते चाभावे धात्वर्थस्य पतनादेरधिकरणत्वेन द्वित्वावच्छिन्नस्य पञ्चम्यर्थवृत्तित्वादिद्वितीयार्थकर्तृकत्वोभयस्य च प्रतियोगित्वेनान्वयो

व्युत्पत्तिवैचित्र्यात्। एवं च पतनसामान्ये कूपवृत्तित्वान्धकर्तृकत्वोभयाभावानुकूलव्यापारविषयकयत्नवानित्याद्यस्य, भोजनसामान्ये सविषान्नकर्मकत्वमित्रकर्तृकत्वोभयाभावानुकूलव्यापारविषय-कयत्नवानिति द्वितीयस्य बोधः।

एवमेवाकाशं न पश्यति घट इत्यादावाकाशविषयकदर्शनस्य घट-वृत्तिदर्शनस्य चाप्रसिद्धया वक्ष्यमाणरीत्याऽन्वयबोधो द्रष्टव्य इति। तत्र द्वितीयया विषयित्वरूपं कर्मत्वं लक्षणया च घटवृत्तित्वं द्वित्वं च बोध्यते। धातुना चालौकिकभिन्नं जन्यं प्रत्यक्षं, तत्रैव द्वित्वावच्छिन्नद्वितीयार्था-न्वितनञर्थस्यान्वयः। आख्यातस्य तादृशोभयाभावान्वितं निरूपकत्वमर्थः। तथा चालौकिकभिन्नजन्यप्रत्यक्ष-सामान्यवृत्त्याकाशवि-षयित्वघटवृत्तित्वोभया-भावनिरूपको घट इत्यन्वयबोधः।

न चाकाशं न पश्यत्यभाव इत्यादौ समवायसंबन्धेना-भाववृत्तित्वाप्रसिद्धया नोक्तक्रमेण समञ्जसमिति वाच्यम्, तत्र हि धातोर्निरुक्तलौकिकप्रत्यक्षप्रतियोगित्वं समवायश्चार्थः। द्वितीयायाश्च विषयिप्रतियोगिकत्वमभावानुयोगित्वं त्रित्वं चार्थः। एकदेशे च विषयित्वे प्रकृत्यर्थस्याकाशादेर्निरूपकत्वेनान्वयः। तथा च समवायसंबन्धसामान्ये आकाशविषयिप्रतियोगिकत्वनिरुक्त-लौकिकप्रत्यक्षप्रतियोगिकत्वाभावानुयो- गिकत्वैतत्रित्वावच्छिन्नस्य योऽभावस्तन्निरूपकोऽभाव इत्यन्वयबोधः।

केचित्तु तत्र धातोर्निरुक्तलौकिकप्रत्यक्षसमवायोऽर्थः। द्वितीयायाश्च विषयिप्रतियोगिकत्वमभावानुयोगिकत्वं चार्थः। विषयित्वे च एकदेशे प्रकृत्यर्थस्याकाशस्य निरूपकतयाऽन्वयः। तथा च निरुत्तलौकिक-प्रत्यक्षसमवाये आकाशविषयिप्रतियोगिकत्वा-भावानुयोगि-कत्वोभयत्वावच्छित्रस्य योऽभावस्तन्निरूपकोऽभाव इत्यन्वयबोधः।-

अनयैव दिशा अप्रसिद्धिस्थले बोधो द्रष्टव्य इत्यपि वदन्ति।

हिमवतो गङ्गा प्रभवति इत्यादौ न पञ्चम्या हेतुत्वं धातुना च उत्पत्तिर्बोध्यते। तथा सति **'जनिकर्तुः प्रकृतिः'** इत्यत एव उपपत्तौ **'भुवः प्रभवः'** इति सूत्रप्रणयनवैयर्थ्यात्। किं तु प्रकर्षेण भवनं प्रभवः प्रकाशः आद्यबहिःसंयोग इति यावत्। स एव धात्वर्थः। बहिःपदार्थः प्रकृते भूखण्डमेव। पञ्चम्यर्थश्च संयोगध्वंसाव्यवहितोत्तरवृत्तित्वमाख्यातार्थ आश्रयता। तथा च

हिमालयसंयोगध्वंसाव्यवहितोत्त-रक्षणवर्त्याद्यपृथिवीसंयोगाश्रयतावती गंगेत्यन्वयधीः वैकुण्ठात्काशीतो वा गंगाप्रभवतीत्य प्रयोगात् अव्यवहितेति आद्येतिच। वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसंबन्धस्य काशीसंयोगध्वंसा-व्यवहितोत्तरक्षणे चाद्यस्य तस्याभावात्। वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्येत्यादावपि स एव धात्वर्थः। परंतु अत्र वल्मीकाग्रोर्ध्वदेशो बहिःपदार्थ इति विशेषः।

कृष्णात्पराजयते शिशुपालः, अध्ययनात्पराजयते बालः, इत्यादौ च धातोरसहिष्णुता पञ्चम्याः कर्मत्वमाख्यातस्याश्रयत्वमर्थः। श्रीकृष्णं न सहते अध्ययनं न सहत इति तदर्थविवरणात्। असहिष्णुता च द्वेषविशेषोऽभि-भवाशक्यत्वज्ञानमशक्यत्वज्ञानं वा। इत्थं च श्रीकृष्णविषयकद्वेषवान् श्रीकृष्णविषयकाभिभवाशक्यत्वज्ञानवान् वा इत्याद्यस्य अध्ययनविषय-काशक्यत्वज्ञानवानित्यन्त्यस्य बोधः।

विप्राद्धनमादत्ते इत्यादौ पञ्चम्या यथेष्टविनियोगोऽर्थो न तु स्वत्वं चौराद्धनमादत्ते इत्यादौ चौरस्य स्वत्वाभावेन तदसंभवासत्। धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थो न तुं स्वत्वजनकस्वीकारः, विप्राद्धनमादत्ते चौर इत्यादौ चौरस्य तदसंभवात्। पञ्चम्यर्थस्य विनियोगस्य चाव्यवहितोत्तरत्वसंबधेन धात्वर्थतावच्छेदकविनियोगेऽन्वयः। अव्यवहितोत्तरत्वं च स्वसमानविषयकपुरुषान्तरीयविनियोगव्यवहितभिन्नत्वं, तेन शूद्रतः प्रतिगृह्य विप्रेण दत्तं धनमादत्तरि शूद्रादादत्ते इति न प्रयोगः। इत्थं च विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्टविनियोगफल-कस्वीकारवानित्यन्वयबोधः।

अधर्माज्जुगुप्सत इत्यत्र पञ्चम्याः कर्मत्वं धातोर्निन्दार्थः। अधर्मं निन्दतीत्यर्थः। अधर्माद्विरमतीत्यादौ धातोः करणानन्तरमकरणं पञ्चम्याः कर्मत्वमर्थः। स च करणेऽकरणेचान्वेति। अधर्मं कृत्वा पुनर्न करोतीत्यर्थः। एवं धर्मात्प्रमाद्यतीत्यादौ पञ्चत्या विषयित्वं धातोरनवधानमाख्यातस्य चाश्रयत्वमर्थः। धर्मविषयकानवधानाश्रय इत्यन्वयधीः।

उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ धातोः स्वविषयक-प्रत्यक्षविरोधिव्यापारः, पञ्चम्याः संबन्धित्वं धत्वर्थतावच्छेदकप्रत्यक्षान्वितम्, आख्यातस्य कृतिरर्थः। उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधि-व्यापारानुकूलकृतिमानिति चान्वयधीः।

दण्डाद्घटः धूमादग्निमानित्यादौ पञ्चमी [illegible] क्रियायोगाभावात्।

किंतु जनकत्वज्ञापकत्वरूपे हेतुत्वे जन्यत्वज्ञाप्यत्वरूपे वा हेतुमत्त्वे हेताविति सूत्रेणानुशिष्टा। न चैवं जनिकर्तुः प्रकृतिरिति सूत्रं व्यर्थम्। काष्ठात्पचतीत्यादाविव दण्डाज्जायत इत्यादावपि उत्पत्तिरूपधात्वर्थनिरूपितहेतुत्वार्थकपञ्चम्या हेताविति सूत्रेणैव संभवादिति वाच्यम्। उत्पत्तेरहेतुकत्वेऽपि सावधिकत्वादुत्पत्तिनिरूपितता-दृशस्वरूपसंबन्धस्य हेतुत्वादन्यत्वेन हेताविति सूत्रेण पञ्चम्या अलाभात्।।

**एवमपि परक्रयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्।**

वृक्षात्पर्णं पततीत्यादौ पर्णादेरपादानत्ववारणाय परकीयेति। अत्र पञ्चम्या विभागजनकत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं चार्थः। विभागेऽन्योन्याभावे चाधिकरणत्वेन वृक्षोऽन्वेति। तथा च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पर्णमिति वाक्यार्थः। तथा च 'ध्रुवमपायेऽपादानम्' इति पाणिनिसूत्रम्। अपाये विभागे ध्रुवं निश्चलं प्रकृतपञ्चम्यर्थविभागजनकत्वा-न्वयिक्रियाशून्यमिति तदर्थः। तेन धावतोऽश्वात्पततीत्यादावश्वादेः पुरुषनिष्ठविभागहेतुक्रियावत्त्वेऽपि प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिनी या पतनक्रिया तच्छून्यत्वमव्याहतम्। स्पन्दजन्यविभागाश्रयत्वेन वृक्षादेरपादानत्वे वृक्षात्पर्णं स्पन्दत इत्यपि स्यादतः क्रियते सकर्मकधात्वर्थपरम्।

व्याघ्राद्बिभेतीत्यादौ पञ्चमी नापादानत्वे, किंतु हेतुत्व इत्यग्रे वक्ष्यते। धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः। तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वम्।

यत्तु विभागावच्छिन्नक्रियायास्त्यजधात्वर्थतया विभागे विभागविशिष्टक्रियाजन्यत्वाभावान्न दोष इति तन्न। तर्हि अधः संयोगावच्छिन्नक्रियाया एव पतत्यर्थ वृक्षपर्णविभागेऽधः संयोगविशिष्टक्रियाया अजनकत्वादसंभवापत्तेः। विभागे फलोपलक्षितव्यापारजन्यत्वमुभयत्र तुल्यमिति दिक्।

वृक्षाद्विभजत इत्यादौ विभागावधित्वमपादानत्वम्, अवधित्वं स्वरूपसंबन्धरूपं पञ्चम्यर्थः। अपाये विभागे ध्रुवम् अवधिभूतमपादानमित्यपि पाणिनिसूत्रार्थः। तथा च वृक्षनिष्ठावधिता-निरूपकविभागाश्रयः पर्णमित्युक्तवाक्यार्थः। न चैवं स्वस्माद्विभजत इत्यपि स्यात्। स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागस्यापि

स्वस्मिन्नभावात्। इत्थं चापादानपदं पञ्चमी च नानार्थमेवेति बोध्यम्। धावतोऽश्वात्पततीत्यादावपि अवधित्वमेव पञ्चम्यर्थ इत्यपि कश्चित्।

व्याघ्राद्बिभेति, शत्रोः परित्रायत इत्यादौ पञ्चमी नापादाने किंतु 'भीत्रार्थानां भयहेतुः' इति सूत्रेणानुशिष्टा हेतुत्वार्थिका। धातोश्चयथायथं भयं भयाभावश्चार्थः। पञ्चम्यर्थहेतुत्वं धात्वर्थे भये धात्वर्थतावच्छेदके च भयेऽन्वेति। आश्रयत्वं व्यापारश्च यथायथमाख्यातार्थः। तथा च व्याघ्रहेतुकभयाश्रय इत्याद्यस्य शत्रुहेतुकभया-भावानुकूल-व्यापारवानित्यन्त्यस्यार्थः। इत्थं च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रं प्रपञ्चार्थमिति बोध्यम्।

एवं कूपादन्धं वारयतीत्यादौ पञ्चम्या अधःसंयोगानुकूलक्रियायारूपं पतनं, द्वितीयाया धात्वर्थव्यापारान्वितं वृत्तित्वम्, धातोः विरोधिव्यापारोऽर्थः। तथा चान्धवृत्तिकूपादिनिष्ठाधः संयोगानुकूलक्रियाविरोधि-व्यापारविषयककृतिमानिति वाक्यार्थः संपद्यते। स न युक्तः। यत्र हि त्रिक्षणावस्थायिनि खण्डकूपे परमाण्वादेरधःसंयोगो मानाभावेनासिद्धः तत्रासंभवात्। अत एव द्वितीयायाः पतनं पञ्चम्या धात्वर्थतावच्छेदका-भावान्वयि वृत्तित्वं धातोरभावानुकूलव्यापारोऽर्थः। तथा च कूपवृत्त्यन्धपतनाभावानुकूलव्यापार-विषयकयत्नवानित्यन्वयोऽप्यपास्तः। यदन्धस्य पतनमप्रसिद्धं तत्रासंभवात्। किंतु धातोरभावानुकूलव्यापारः पञ्चम्या वृत्तित्वं द्वितीयायाः प्रतियोगित्वमनुयोगित्वं वा धात्वर्थतावच्छेद-कीभूताभावान्वितमर्थः। अभावश्च कूपादिसमभिव्याहारात्पतनादिना तज्जन्याधप्रतियोगिकाभावा-नुकूलव्यापारविषयकयत्नवानिति वाक्यार्थः। एवमेतस्मात्सविषादन्नादिदं मित्रं वारयतीत्यादौ यत्सविषान्नस्य सन्मित्रस्य च भोजनमप्रसिद्धं तत्रापि भोजनसंबन्धेन सविषान्नवृत्तिमित्रप्रतियोगिका-भावानुकूलव्यापारविषयककृतिमानित्यन्वयधीः।

परे तु कूपादन्धं वारयतीत्यत्र सविषादन्नदिदं मित्रमित्यत्र च धातोः पतनमाद्ये, द्वितीये भोजनम्, अभावानुकूलव्यापारश्चोभयत्रार्थः। पञ्चम्या अवच्छिन्नत्वमाद्ये द्वितीये कर्मत्वमुभयत्र द्वित्वं चार्थः। द्वितीयायाश्च कर्तृत्वमर्थः। धात्वर्थतावच्छेदकीभूताभावे धात्वर्थपतनादेरधिकरणत्वेन, द्वित्वावच्छिन्नस्य पञ्चम्यर्थद्वितीयार्थकर्तृत्वोभस्य च प्रतियोगित्वेनान्वयो व्युत्पत्तिवैचित्र्यात्। तथा च पतनसामान्ये यः कूपावच्छिन्नत्वान्ध-कर्तृत्वोभयप्रतियोगिकाभाव-स्तदनुकूलव्यापार-विषयकयत्नवानिति आद्यस्य, यः भोजनसामान्ये

सविषान्नकर्मत्वमित्रकर्तृत्वोभयप्रतियोगिकाभावस्तनुकूल-व्यापारविषयकयत्नवानिति द्वितीयस्यार्थः।

आकाशं न पश्यति घटश्चैत्रो वेत्यादौ द्वितीयया विषयित्वं लक्षणया घटादिवृत्तित्वं द्वित्वं च बोध्यते। धातुना लौकिकविषयि-त्वावच्छिन्नचाक्षुषप्रत्यक्षम्। तथा च लौकिकचाक्षुषप्रत्यक्षसामान्ये य आकाशविषयित्वघटादिवृत्तित्वोभयाभावः तत्प्रतियोगिनिरूपको घट इत्यर्थः। आकाशविषयकचाक्षुषोपनीतभानेऽपि लौकिकविषयित्वावच्छेदे-नाकाशविषयित्व-चैत्रवृत्तित्वोभयाभावसत्त्वान्न दोषः। एवमन्यत्राप्रसिद्धिस्थले बोध्यमित्याहुः।

हिमवतो गङ्गा प्रभवतीत्यादौ पञ्चम्या हेतुत्वं धातोरुत्पत्तिरर्थ इति न युक्तम्। तर्हि 'जनिकर्तुः -' इत्यत एवोपपत्तौ 'भुवः प्रभवः' इति सूत्रवैयर्थ्यप्रसङ्गात्। किंतु प्रकर्षेण भवनं प्रकाशः आद्यबहिः संयोगरूपो धात्वर्थः। बहिः पदार्थः प्रकृते भूखण्डम्। पञ्चम्यर्थः संयोगध्वंसाव्यवहितो-त्तरक्षणवृत्तित्वम्। आख्यातार्थ आश्रयत्वम्। तथा च हिमालयसंयोगध्वं-साव्यवहितोत्तरक्षणवृत्त्याद्य-पृथिवीसंयोगाश्रयत्ववती गङ्गेत्यर्थः। वैकुण्ठात्का-शीतो वा गङ्गा प्रभवतीत्यप्रयोगादव्यवहितेति, आद्येति च। वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसंबन्धस्य काशीसंयोग-ध्वंसाव्यवहितोत्तरक्षणे आद्यस्य तस्याभावाददोषः। 'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इत्यादावप्येवमेव। तत्र बहिःपदार्थो वल्मीकाग्रोर्ध्वदेश इति विशेषः।

कृष्णात्पराजयते शिशुपालः अध्ययनात्पराजयते बाल इत्यादौ धातोरसहिष्णुता, पञ्चम्याः कर्मत्वमाख्यातस्याश्रयत्वमर्थः। श्रीकृष्णं न सहते, अध्ययनं न सहते इतिविवरणात्। असहिष्णुता च द्वेषः, अभिभवाशक्यत्वज्ञानम्, अशक्यत्वज्ञानं वा। तथा च श्रीकृष्णविषयकाभिभ-वाशक्यत्वज्ञानवान् शिशुपालः कृष्णविषयकद्वेषवान् वेत्याद्यस्य, अध्ययन-विषयकाशक्यत्वज्ञानवान् बाल इत्यन्त्यस्यार्थः।

विप्राद्धनमादत्ते इत्यादौ पञ्चम्या यथेष्टविनियोगोऽर्थोनतु स्वत्वं चौराद्धनमादत्ते इत्यादौ चौरस्य स्वत्वाभावेन तदसंभवात्। धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थो न तु स्वत्वजनकस्वीकारः। विप्राद्धनमादत्ते चौर इत्यादौ चौरस्य तदसंभवात्। पञ्चम्यर्थश्च विनियोगोऽव्यवहितोत्तरत्वसंबन्धेन धात्वर्थतावच्छेदके विनियोगेऽन्वेति। अव्यवहितोत्तरत्वं च स्वसमानविषय-

कपुरुषान्तरीयविनियोग-व्यवहितभिन्नत्वम्। तेन शूद्रतः प्रतिग्रहीत्रा विप्रेण दत्तं धनमादातरि शूद्रदादत्त इति न प्रयोगः। इत्थं च विप्रीययथेष्टविनियोगा-व्यवहितोत्तरधनवृत्तियथेष्टविनियोगफलकस्वीकारवानित्यर्थः।

अधर्माज्जुगुप्सत इत्यत्र पञ्चम्याः कर्मत्वं धातोर्निन्दार्थः। तथाचाधर्मं निन्दतीत्यर्थः। अधर्माद्विरमतीत्यत्र धातोः करणानन्तरमकरणं पञ्चम्याः कर्मत्वमर्थः। स च करणेऽकरणे चान्वेति। तथा चाधर्मं कृत्वा पुनर्न करोतीत्यर्थः। धर्मात्प्रमाद्यतीत्यादौ पञ्चम्या विषयत्वं धातोरनवधानमाख्यातस्याश्रयत्वमर्थः। धर्मविषयकावधानाभावाश्रय इति वाक्यार्थः।

उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ धातोः स्वविषयकप्रत्यक्षविरोधिव्यापारः पञ्चत्याः संबन्धित्वं धात्वर्थतावच्छेदकप्रत्यक्षान्वितमाख्यातस्य कृतिरर्थः। तथाचोपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमानिञ्छष्य इति वाक्यार्थः।

दण्डाद्धटः, धूमाद्वह्निमानित्यादौ तु पञ्चमी नापादाने, क्रियायोगाभावात्। किंतु जनकत्वज्ञापकत्वरूपे हेतुत्वे जन्यत्वज्ञाप्यत्वरूपे हेतुमत्त्वे वा 'हेतौ' इति सूत्रेणानुशिष्टा। नचैवं 'जनिकर्तुः' इति सूत्रं व्यर्थम्, काष्ठात्पचतीत्यत्रेव दण्डाज्जायत इत्यादावप्युत्पत्तिनिरूपित-हेतुंत्वार्थकपञ्चम्याः 'हेतौ' इति सूत्रेणैव संभवादिति वाच्यम्। उत्पत्तेरहेतुकत्वेऽपि सावधिकत्वव्यवहारा-दुत्पत्तिरूपधात्वर्थनिरूपित-स्वयपसंबन्धस्य हेतुत्वानात्मकतया 'हेतौ' इति सूत्रेण तदर्थकपञ्चम्या असंभवादिति।।

154

## अथ बहुव्रीहिसमासप्रकरणम्

शेषो बहुव्रीहिः। असर्वोपयोगार्थकाच्छिषेः कर्मणि घञा निष्पन्नस्य सूत्रघटकशेषपदस्योपयुक्तादन्यपरत्वेन यस्य पदस्याऽर्थस्य वा पूर्वत्रोपयोगस्तस्य पूर्वमप्रसिद्धिमभिधाय भाष्यकृता सिद्धान्तितं त्रिकतः शेष इत्येतन्मूलकव्याख्यानात् शेष इत्यस्य प्रथमान्तत्वाच्च तेन प्रथमान्ताऽपेक्षशेषस्यैव ग्रहणमिति बोध्यम्। पदतः शेषस्य ग्रहणे सामान्यतो विशेषतो वा यस्य पदस्योपयोग-स्तदन्याऽप्रसिद्धिः, सुप्सुपे' त्यत्र सामान्यतः द्वितीयाश्रिते' त्यादौ विशेषत उपयोगः। अर्थोऽपि, पूर्वपदार्थप्रधानत्वेऽन्य-पदार्थप्रधानत्वे चाऽव्ययवीभावः। उत्तरपदार्थप्रधानत्वे तत्पुरुषः, प्रसिद्ध एव, अतो यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेष इति विवक्षितमितिभावः। सप्शेषः प्रथमान्तमिति।

ननूक्तप्रकारेणप्रथमान्तस्य बहुब्रीहिरिति सिद्धम्, तत्कथं, (प्रादयोगताद्यर्थे प्रथमया) इति तत्पुरुषसमासप्रकरणस्थवार्त्तिकेन प्रगत आचार्य इत्यादौ प्रथमान्तस्य तत्पुरुषसमासविधानादिति चेन्न। उक्तवार्त्तिकेन प्रथमान्तेन प्रादीनामुक्तसमासविधानेऽपि प्रथमान्तस्योक्तसमासाविधानामिति भावः। न च कण्ठे काल इत्यादौ व्यधिकरणपदस्यापि बहुब्रीहिदर्शना-त्प्रथमान्तस्यैवोक्तसमास इत्ययुक्तमिति वाच्यम्। तत्र तत्र ज्ञापक-साध्यबहुब्रीहेर्दृष्टत्वात्।।

इत्थमपि परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम् । वृक्षात्पर्णं पततीत्यादौ पत्रादेरपादानत्ववारणाय परकीयेति। अत्र पंचम्या विभागजनकत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं चार्थः। विभागेन्योन्याभावे चाधिकरणत्वेन वृक्षोऽन्वेति। तथा च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रति योगितावच्छेदकपतनाश्रयः पत्रमिति वाक्यार्थः। तथा च "ध्रुवमपायेऽपादानम् " इति पाणिनिसूत्रम्। अपाये ध्रुवं निश्चलं प्रकृतिपंचम्यर्थविभागजनकत्वान्वयि क्रियाशून्यमिति तदर्थः। तेन धावतोऽश्वात्पततीत्यादौ अश्वादेः पुरुषनिष्ठविभाग-हेतुक्रियावत्त्वेऽपि प्रकृतिपंचम्यर्थविभागजनकत्वान्वयिनी या पतनक्रिया तच्छून्यत्वमव्याहतस्पंदजन्यविभागाश्रयत्वेन वृक्षादेरपादानत्वे वृक्षात्पर्णं स्पदंत इति स्यात् अतः क्रियते। क्रियापदं सकर्मकधात्वर्थपरम्। व्याघ्राद्बिभेतीत्यादौ पंचमी नापादनत्वे-किंतु हेतुत्व इत्यग्रे वक्ष्यते। धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः। तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वम्। यत्तु विभागावच्छिन्नक्रियायास्त्यजधात्वर्थतया विभागविशिष्टक्रियाजन्यभावान्न दोष इति। तन्न। तर्हि अधःसंयोगावच्छिन्नक्रियाया एव पतत्यर्थतया वृक्षपर्णविभागेऽधः संयोगाविशिष्टक्रियाया अजनकत्वादसंभवापत्तेः। विभागे फलोपलक्षितव्यापारजनकत्वमुभयत्र तुल्यमिति दिक् । वृक्षाद्विभजत इत्यादौ विभागावधित्वमपादानत्वम् अवधित्वं स्वरूपसंबंधरूपं पंचम्यर्थः। अपाये विभागेध्रुवम्अवधिभूतमपादानमित्यपिपाणिनिसूत्रार्थः। तथा च वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमित्युक्तवाक्यार्थः। न चैवं स्वंस्वस्माद्विभजत इत्यपि स्यात् । स्वप्रतियोगिकत्वविशिष्टसंयोगस्यैव स्वावधिकत्वविशिष्टविभागस्यापि स्वस्मिन्नभावात् । इत्थं चापादानपदं पंचमीपदं नानार्थमेव बोध्यम् । धावतोऽश्वात्पततीत्यादावपि अवधित्वमेव पंचम्यर्थः। व्याघ्राद्बिभेति, शत्रोः पराजयत इत्यादौ पंचमी नापादाने। किंतु "भीत्रार्थानां भयहेतुः" इति सूत्रेणानुसृष्टहेतुत्वार्थिका। धातोश्च यथायथं भयं भयाभावश्चार्थः।

पंचम्यर्थहेतुत्वं धात्वर्थभये धात्वर्थतावच्छेदकेचाभयेऽन्वेति। आश्रयत्वं व्यापारश्च यथायथमाख्यातार्थः। तथा च व्याघ्रहेतुकभयाश्रय इत्याद्यस्य शत्रुहेतुकभयानुकूल-व्यापारवानित्यंतस्यार्थः। इत्थं च पंचम्यैवोपपत्तौ पृथक्सूत्रं प्रपञ्चार्थमिति बोध्यम् । एवं कूपादन्धं वारयतीत्यादौ पंचम्या अवधित्वमधः-संयोगानुकूलक्रियारूपं पतनं द्वितीयाया धात्वर्थैकदेशप्रतिबंधान्वितवृत्तित्वम्। धातोः प्रतिबंधानुकूलव्यापारोऽर्थः। तथा चांधवृत्तिकूपावधिकपतन-प्रतिबंधानुकूलव्यापारानुकूलकृति मानिति वाक्यार्थः संपद्यते। स च न युक्तः। यत्र हि त्रिक्षणावस्थयिनी खण्डकूपेपरमाण्वादेरधः संयोगो मानाभावेनासिद्धः तत्रासंभवात् । अत एव द्वितीयायाः पतनंपञ्चम्या-धात्वर्थतावच्छेदकाभावा-न्वयिवृत्तित्वम्। धातोरभावान-ुकूलव्यापारः। तथा च कूपवृत्त्यंधपतनाभावानुकूल-व्यापारविषयकत्नवानिति वाक्यार्थोऽपि न युक्तः। यदंधस्य पतनमप्रसिद्धम् तत्रसंभवात् । किंतुधातोरभावा-नुकूलव्यापारः पंचम्या वृत्तित्वम् । द्वितीयाप्रतियोगि-त्वमनुयोगित्वम्। धात्वर्थतावच्छेदकीभूताभावान्वितमर्थः। अभावश्च कूपादिसमभि-व्याहारत्पतनादिना तज्जन्याधः संयोगादिना वा संबंधेन बोध्यः। तथा च पतनादिसंबंधेन कूपवृत्त्यंधप्रतियोगिकाभावा-नुकूलव्यापारविषयक-यत्नवानिति वाक्यार्थः। एवमेतस्मात्सविषादन्नान्मित्रं वारयतीत्यादौ यत्सविषान्नस्य यन्मित्रस्य च भोजनमप्रसिद्धम् - तत्रापि भोजनसंबंधेन सविषान्नवृत्तिप्रतियोगिकाभावानु-कूलव्यापारविषय-ककृतिमानित्यन्वयधीः। परे तु कूपादंधं वारयतीत्यत्र सविषादन्नाद्धातोरुभयत्र मित्रं वारयतीत्यत्र धातोः पतनामाद्ये, द्वितीये भोजनम् । अभावानुकूलव्यापारश्चोभयत्रार्थः। द्वितीयायाः कर्तृत्वमर्थः। धात्वर्थतावच्छेदकीभूताभावे धात्वर्थपतनादेरधिकरणत्वेन द्वित्वावच्छिन्नत्वं पचम्यर्थद्वितीयार्थ कर्तृत्वोभयस्य प्रतियोगित्वेनान्वयो व्युत्पत्तिवैचित्र्यात् । तथाचपतनसामान्ये कूपावच्छिन्नत्वांधकर्तृत्वोभय-प्रतियोगिकाभावानुकूलव्यापारविष-यकत्ववानिति आद्यस्य, भोजनसामान्येसविषान्नकर्मत्वमित्यत्र कर्तृत्वोभयप्रतियोगिकाभावानुकूलयत्रवानिति द्वितीयस्यार्थः। आकाशं न पश्यति घटश्चैत्रो वेत्यादौ द्वितीयाविषयित्वम् । लक्षणया घटादिवृत्ति बोध्यते। धातुना लौकिक विषयत्वावच्छिन्नचाक्षुषप्रत्यक्षम् । तत्रैवावच्छिन्नावच्छिन्नद्वितीयार्थान्वितनञर्थस्यान्वयः। आख्यातस्य तादृशोभयाभावान्वितनिरूपितत्वमर्थः। तथा च लौकिकचाक्षुषप्रत्यक्षसामान्ये

यआकाश विषयित्वघटादिवृत्तित्वोभयाभावः तत्प्रतियोगितानिरूपको घट इत्यर्थः। आकाशादिविषयकचाक्षुषोपनीतभानेऽपि लौकिकविषयित्वावच्छिन्नाकाशविषयित्वचैत्रवृत्तित्वोभयाभावसत्त्वान्न दोषः। एवमन्यत्राप्रसिद्धस्थले बोध्यमित्याहुः। हिमवतो गंगाप्रभवतीत्यादौ पंचम्या हेतुत्वं धातोरुत्पत्तिरर्थ इति न युक्तम् । तर्हि 'जनिकर्तुः' इत्यत एवोपपत्तौ "भुवः प्रभवः" इति वैयर्थ्यप्रसंगात् । किंतु प्रकर्षेण भवनं प्रकाशः आद्यबहिः संयोगरूपः। स च धात्वर्थः बहिः सर्वः प्रवृत्तेः स एव पंचम्यर्थः। संयोगध्वंसाव्यवहितोत्तरक्षणवृत्तित्वमाख्यातार्थआश्रयत्वम् । तथा च हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवत्याद्यपृथिवीसंयोगाश्रयत्ववती गंगेत्यर्थः। वैकुंठात्काशीतो वा गंगा प्रभवतीत्यप्रयोगादव्यवहितेति, आद्येति च। वैकुंठसंयोगध्वंसाव्यवहितोत्तरक्षणसंबंधस्य काशीसंयोग व्यवहितोत्तरक्षणे आद्यस्य तस्याभावाददोषः। "वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य" इत्यादावप्येवमेव। तत्र तर्हि पदार्थो वल्मीकाग्रोर्ध्वदेश इति विशेषः। कृष्णात्पराजयते, अध्ययनात्पराजयते बाल इत्यादौ धातोरसहिष्णुता पंचम्याः कर्मत्वमाख्यातस्याश्रयत्मर्थः। श्रीकृष्णं न सहते, अध्ययनंनसहतेइतिविवरणात्। असहिष्णुताद्वेषः अभिभवाशक्यत्वज्ञानम् आशक्यज्ञानं वा तथा च श्रीकृष्णविषयकभिन्नाभिभवाशक्यत्वज्ञानवान् शिशुपालः कृष्णविषयकद्वेषवान् वेत्याद्यस्य, अध्ययनविषयकाशक्यत्वज्ञानवान् बाल इत्यंतस्यार्थः। विशद्धनमादत्ते इत्यादौ पथवृत्तिनियोगोर्थो नतु स्वत्वम्। चोराद्धनमादत्ते इत्यादौ चोरस्यं स्वत्वाभावेन तदसंभवात् । धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थः। न तु स्वत्वजनकस्वीकारः। विप्राद्धनमादत्ते चौर इत्यादौ चौरस्य तदसंभवात्। पंचम्यर्थश्च विनियोगोऽव्यवहितोत्तरत्वसंबंधेन धात्वर्थतावच्छेदके विनियोगेऽन्वेति। अव्यवहितोत्तरत्वं च स्वसमानविषयकपुरुषांतरीय-विनियोगव्यवहितभिन्नत्वम्। तेन शूद्रतः प्रतिग्रहीत्रा विप्रेण दत्तं धनमादातरि शूद्रादादत्त इति न प्रयोगः। इत्थं च विप्रयथेष्टविनियोगाव्यवहितोत्तर-धनवृत्तियथेष्टविनियोगफलस्वीकारवानित्यर्थः। अधर्माज्जुगुप्सत इत्यत्र पंचम्यर्थः कर्मत्वं धातोर्निंदार्थः। तथाचाधर्मंनिंदतीत्यर्थः। अधर्माद्विरमतीत्यत्र धातोः करणमर्थः पंचम्याः कर्मत्वमर्थः। स च करणेऽकरणे चान्वेति। तथा चाधर्मं कृत्वा पुनर्न करोतीत्यर्थः। धर्मात्प्रमाद्यतीत्यादौ पंचम्या विषयत्वं धातोरवधानताख्यातस्याश्रयत्वमर्थः। धर्मविषयकावधानभावाश्रय इति वाक्यार्थः। उपाध्यायादंतर्धत्ते शिष्य इत्यादौ

धातोः स्वविषयकप्रत्यक्षविरोधव्यापारः पंचम्याः संबंधित्वं धात्वर्थतावच्छेदकप्रत्यक्षान्वितमाख्यातस्य कृतिरर्थः। तथाचोपाध्याय-संबंधित्वस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमानिति वाक्यार्थः। दंडाद्घटः, धूमाद्वह्निमानित्यादौ पंचमी नापादाने क्रियायोगाभावात्। किंतुजनकत्वज्ञापकत्वरूपहेतुत्वे जन्यत्वव्याप्यहेतुमत्त्वे वा "हेतौ" इति सूत्रानुशिष्टा। न चैवं "जनिकर्तुः प्रकृतिः" इति व्यर्थम्। काष्ठात्पचतीत्यत्रेव दंडाज्जायत इत्यादावप्युत्पत्तिनिरूपिते हेतुत्वार्थकपंचम्याः "हेतौ" इति सूत्रेणैव संभवादिति वाच्यम्। उत्पत्तेः सहेतुत्वेपि सावधिकत्वव्यवहारा-दुत्पत्तिरूपधात्वर्थनिरूपितस्वरूपसंबंधस्य हेतुत्वानात्मकतया "हेतौ" इति सूत्रेणैतदर्थकपंचम्या असंभवादिति।

षष्ठी शेषे। अत्र सूत्रे शेषपदेन कर्मादिभ्यो येऽन्येर्थाः स शेष इति भाष्यकृतोक्तत्वात्कारकप्रातिपदिकार्थभिन्नस्य स्वत्वादेर्ग्रहणम्। स च शेषः स्वत्वत्वादिरूपेण सम्बन्धत्वेन रूपेण च षष्ठीवाच्यः। राज्ञः पुरुषोऽस्तीत्येतद्वाक्यजन्यशाब्दबोधाऽनन्तरं पुरुषो राजस्वत्ववान्नवेति सन्देहो न भवतीति यथा विशेषरूपेण कल्प्यते तथा राजसम्बन्धी न वेति च सन्देहाऽनुत्पत्त्या सामान्येन सम्बन्धत्वेन रूपेण च शेषस्य षष्ठीवाच्यता कल्प्यते इति भावः। राजनिरूपित-स्वत्ववदभिन्नपुरुषकर्तृकसत्तेति बोधः।।

रुजाऽर्थानामिति। रुजा व्याधिरर्थो येषान्ते रुजार्थास्तेषां तथोक्तानाम्। धातोर्भाववचनत्वस्याऽव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट् भावशब्देन सिद्धरूपाऽर्थ उच्यते ल्यूट्प्रकृत्यर्थोऽविवक्षितस्तदाह-भावकर्तृकाणामिति।।

हिसायां किम् ; धानापेषणमिति। जासिनिप्रहण'ति सूत्रे हिं साग्रहणाऽभावे प्रत्युदाहरणभूतोक्तप्रयोगे उक्तसूत्रेण षष्ठ्याऽपत्त्या (प्रतिपदविधाना षष्ठी न समस्यते) इति समासनिषेधेन धानायाः पेषणमित्यसमस्तप्रयोगाऽपत्तिः। तद्ग्रहणसत्त्वे तु पिषधातोरत्र हिंसार्थकत्वाऽभावादनेन षष्ठ्यप्राप्त्या 'कर्तृकर्मणोरि'ति षष्ठ्या समासे तदुपपत्तिरिति भावः।।

ननु गामस्य तदहः सभायां दीव्येयुरित्यत्र नित्यं षष्ठीप्राप्तौ विकल्पार्थं 'द्वितीया ब्राह्मणे' इति सूत्रमिति भाष्यात् 'दिवस्तदर्थस्ये'त्यत्र न शेषदसम्बन्ध इत्याशयेन तिङन्तमुदाहरति-शतस्त दीव्यतीति। यदि 'दिवस्तदर्थस्ये'त्यत्सूत्रस्याऽपि शेषपदसम्बन्धेन समासनिवृत्तिफलकत्वं स्यात्तदा

यत्र समासस्य प्राप्तिसम्भावना तादृशं कृदन्तमेवोदाहरेत्। तथाऽकरणेन ज्ञायते नाऽत्र शेषपदसम्बन्ध इति भावः।।

ननु 'दिवस्तदर्थस्ये'त्यादिसूत्रेण व्यवधानाच्छेषपदाऽसम्बन्धे-नाऽधिकरणकारक एव षष्ठीविधानस्य समुचितत्वेन शेषग्रहणं व्यर्थमित्याशयेनाशङ्कते-शेषे किमिति। समाधत्ते-द्विरहन्यध्ययनमिति। शेषपदाऽसम्बन्धेऽधिकरणे षष्ठी विधानात् प्रत्युदाहरणभूतो क्तप्रयोगे षष्ठ्यापत्तिरिति तद्व्यावृत्त्यर्थं वृत्त्यादिप्रामाणयात् 'अधीगर्थदयेशामि'ति सूत्रे कर्मादीनामविवक्षा शेष इतिभाष्ये कर्मादीना मित्यत्र बहुवचनेनाऽत्रापि शेषपदसम्बन्धबोधनाच्च मण्डूकप्लूत्या शेषपदसम्बन्ध आवश्यक एवेति समाधातुराशयः। वस्तुतस्तु, उक्तभाष्ये बहुवचनेन नाऽत्र सूत्रे शेषपदसम्बन्धलाभः, कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणाम-कर्मकद्वचनमिति वार्त्तिकं प्रत्याख्यातुं शेष इति भाष्यकृतोक्ते परेण शेषश्च क इति पृष्टे कर्मादीनामविवक्षा शेष इति सिद्धान्तिना स्मारितत्वात्। सिद्धान्तभाष्यकारेण शेषपदार्थः स्मारितः नैतावता कृत्वोर्थेऽत्यत्र शेषपदसम्बन्ध इति लभ्यते। किञ्चैतद्भाष्यबलेन दिवस्तदर्थस्येत्यत्र शेषपदसम्बन्धो लेभ्यते। अन्यथा वार्त्तिकरीत्या भावे इष्टस्य शतस्य दीव्यते इति प्रयोगस्याऽसिद्धिरापद्येत। अत एव अधीगर्थादयः प्रेष्यब्रूर्यन्तांः कर्माश्रयपदेनोच्यन्ते इति कैयटेन वार्त्तिकव्याख्यायामुक्तम्। एवञ्च शेषपदसम्बन्धेनोक्त-वार्त्तिकप्रत्त्याख्यानवदेतत्सूत्रद्वयप्रत्याख्याने एवभ ष्यकर्तुस्तात्पर्य्यं, नचैवं 'द्वितीया ब्राह्मणे' इत्येतत्सूत्रस्थ भाष्यं विरुणद्धीति वाच्यम्। वार्त्तिकरीत्योक्तभाष्यस्य सत्त्वादिति तत्त्वम्। किञ्च यदा कर्मणो विवक्षा न तदा षष्ठी स्मराम्यहं मातरमित्युक्तम्भाष्ये। भवन्नये यदा कर्मादिविवक्षा भवती न भवति तदा षष्ठीत वदेत्। एवञ्च ज्ञोविदर्थस्य करणे' इत्यत्राऽपि न शेषपदसम्बन्ध इति बोद्ध्यम्। एवञ्च नाऽज्ञानार्थकजानातियोगे कदाऽपि तृतीया शतं दीव्यतीत्यादि च सिद्ध्यति। ज्ञो विदर्थस्येत्यत्र शेषपदसम्बन्धाऽभावेऽनेनैव व्यवधानात्कथमुप-पत्तिरधीगर्थेत्यत्र भाष्योक्तस्य शेषपदसम्बन्धस्येति नाशङ्क्यम्। मण्डूकाऽनुवृत्त्या शेषपदसम्बन्धस्य तत्र सुलभत्वादित्य लमति विस्तरेण।।

कर्तृकर्मणोः कृति। नाऽत्र सूत्रे शेषपदस्य सम्बन्धः। तथा सति 'षष्ठी शेषे' इत्यनेनैवाऽत्राऽपि षष्ठ्याः सिद्धौ सूत्रमेतद्वैयर्थ्यमापद्येत। नचैतत्सूत्रस्य

ज्ञोऽविदर्थस्येति सूत्रवत्समासनिवृत्तिफलकत्वेन चरितार्थत्वसम्भवे कथं वैयर्थ्यमिति वाच्यम्। (कृद्योगा षष्ठी समस्यते) इत्यनेन तत्र समासस्येष्टत्वादुक्त-फलकत्वाऽभावेन वैयर्थ्यस्य स्पष्टत्वात्। सूत्रघटककृतिरित्यस्य करोतेर्भावे क्विबोपपत्तौ कृद्योगे कर्तरि कर्मणि च षष्ठीति सूत्रार्थो निष्पन्नः। कर्तरि षष्ठ्युदाहरणम्। कृष्णस्य कृतिः। कृतिरिति भावे क्तिन, करणं कृतिः। कर्मषष्ठ्युदाहरणञ्च, जगतः कर्ता कृष्णः। अत्र कर्तृसाहचर्य्याद्भेदसम्बन्धेनाऽन्वयिन एव कर्मणो ग्रहणात्स्तोकं पाक इत्यादौ न क्रियाविशेषणीभूतस्तोकादिपदात्षष्ठी। अन्यथा व्यपदेशिवद्भावेन फलस्य स्वाश्रयत्वात्कर्मत्वेन तत्राऽन्वितस्य स्तोकादेरपि कर्मत्वात्तस्माद्दुर्वारैव षष्ठ्यापत्तिरिति बोध्यम्। किञ्च स्तोकम्पाचक इत्यादौ न क्रियाविशेषणेन स्तोकादिना समानाऽधिकरणसमासो नाऽपि सुप्सुपेत्यनेन सः। स्तोकादेर्धात्वर्थेऽन्वयात्सुबन्तार्थविशेष्येण पाककर्त्राऽन्वयाऽभावेन सामर्थ्यविरहात्। ननु स्तोकं पाक इत्यत्रैव समासाऽऽभावप्रदर्शनस्य समुचितत्वे स्तोकं पाचक इति प्रयोगाऽन्तरे तत्प्रदर्शनं निष्फलमिति वाच्यम्। 'तृजकाभ्यां कर्तरी'ति सूत्रोदाहरणविषये ओदनस्य पाचक इत्यत्र षष्ठीवत्स्तोकम्पाचक इत्यत्राऽपि सा स्यादिति सन्देव्यावृत्तये प्रयोगान्तरे तत्प्रदर्शनस्य साफल्यात्। नचैवं द्वितीयाश्रितेत्यादेः वैयर्थ्याऽऽपत्तिः कष्टं श्रित इत्यत्र सुबन्तार्थविशेष्येण श्रयणकर्त्रा कष्टमित्यस्याऽनन्वयेना-ऽसमार्थ्यादिति वाच्यम्। तस्याऽऽरम्भसामर्थ्या-दवयवद्वारकसामर्थ्येऽपि प्रवृत्त्या सार्थक्यात्। द्वितीयाप्रकरणोक्तपरेतुमतरीत्या सामर्थ्यस्य सत्त्वाच्च।

सुबन्तार्थविशेष्येणाऽनन्वयेन समासाऽभावादेव, दारूणं यथा भवति तथाऽध्यापक इत्यर्थकस्य दारूणाऽध्यापक इत्यस्य सिद्धये मलोपवचनमारब्धं 'पूजनात्पूजितमि'ति सूत्रे भाष्ये। असामर्थ्येऽपि समासाऽभ्युपगमे तु समासेनैवोक्तप्रयोगोपपत्तौ भाष्यकृत्कृतस्य मलोपवचनस्य स्पष्टमेव वैयर्थ्यं स्यात्। उक्तसूत्रस्थभाष्यमेव क्रियाविशेषणान्नषष्ठीत्यत्राऽपि मानं बोद्धयम्। अन्यथ्ज्ञा 'तृजकाभ्यां कर्तरी'ति निषेधसामर्थ्यादव-यवद्वारकसामर्थ्येऽपि षष्ठीसमासस्य प्रवृत्त्योक्तसमासेनैवोक्तप्रयोगोपपत्तौ मलोपवचनस्य स्पष्टैव वैयर्थ्यापत्तिरिति। ननु विभाषाऽधिकारेण षष्ठीसमासस्य वैकल्पिकत्वात्तदभावपक्षे दारुणाऽध्यापक इत्यस्योपपत्तये मलोपवचनस्य चरितार्थत्वे कथं वैयर्थ्यमिति

वाच्यम्। तथा सति वाक्ये मलोपश्च वक्तव्य इत्येव वचनस्य कर्तुमुचितत्वात्। वैयधिकरण्येन समासाऽप्राप्तिविषयकत्वादेव, क्रियाविशेषणे दारुणादौ विशेष्येणाऽनन्वयात्समासाऽप्राप्त्या मलोपविधानमिति कैयटेनोक्तम्। न च विशेष्येणाऽनन्व येऽप्यवयवद्वारकसामर्थ्यमादाय सुप्सुपेति वा मयूरव्यंस केति वा समासेनोक्तप्रयोगोपपत्तौ तदर्थं कृतस्य मलोपवचनस्य सर्वथा वैयर्थ्याऽऽपत्त्या क्रियाविशेषणात्षष्ठ्यभावे समासाऽभावे च न तद्विनिगमकं भवितुमर्हतीति वाच्यम्। उक्तसमासविधायक-शास्त्रद्वयस्याऽसार्वत्रिकत्वेन पूर्वोक्तयुक्त्या षष्ठ्यभावात्तत्समास-स्याऽप्यभावेन चोक्तप्रयोगाऽनुपपत्त्या तदर्थमुक्तवचनस्याऽऽ-वश्यकत्वेनोक्तविषये विनिगमकत्व-स्याऽक्षतेरित्यलम्।।

ननु कर्तृकर्मभ्यां क्रियाऽऽपेक्षापात्तद्वाचिनो धातोरेव सत्त्वात्तेभ्यस्तिङ्कृतोर्विधानेऽपि तिङ्योगे 'न लोके'ति निषेधेन षष्ठ्यभावे कृद्योग एव षष्ठीति कृद्ग्रहणं व्यर्थम्। न च देवदत्तेन शत्योऽश्व इत्यादौ तद्धितयोगेऽश्वरूपकर्मणि षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणमावश्यकमिति वाच्यम्। कारकाऽन्वययोग्यताऽवच्छेदकरूपेण साध्यत्वेनोपस्थितक्रियानिरूपित-कर्मण्येवाऽनेन षष्ठीति नियमेन तद्धितात्तेन रूपेण क्रियोपस्थित्यभावादश्वस्य तादृशक्रियानिरूपितकर्मत्वाऽभावेन तत्र षष्ठ्यप्राप्तेः। न च कृद्ग्रहणमुत्तरसूत्रेऽनुवृत्त्याव्ययपदेन कृदव्ययस्यैव ग्रहणार्थमिति वाच्यम्। अव्यार्थस्य ये कर्तृकर्मणीति व्याख्यानेन कृदव्ययस्यैव तत्र गृहणात्। न च 'उभयप्राप्तावि'त्यत्रान्यपदार्थसम्पादनद्वारा बहुव्रीह्युपपत्त्यर्थं कृद्ग्रहणमिति वाच्यम्। 'एकाचो द्वे' इत्यादाविवाऽन्यपदार्थस्याऽशाब्दत्वेऽपि व्याख्यानात्तदुपपत्तेः। न च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यादौ गौणे णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं कृद्ग्रहणमिति वाच्यम् गौणे णिच्प्रकृत्यर्थकर्तरि तृतीयावद्यत्नमन्तरैव षष्ठ्या अप्युपपत्तेः। एवञ्च कृद्ग्रहणम्व्यर्थमेवेत्याशयेनाऽऽशंकते-कृति किमिति। समाधत्ते-तद्धिते माभूत्कृतपूर्वीकटमिति। अयम्भावः, उक्तरीत्या प्रयोजनाऽन्यथोपपत्त्या व्यर्थीभूतं कृद्ग्रहणं ज्ञापयति, कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियायाः कर्तरि कर्मणि षष्ठी यथा स्यात्, तद्धितान्तशक्तिग्रहमात्र-प्रयोज्योपस्थितिविषयक्रियायाः कर्तृरि कर्मणि माभूदिति। तथा च कृतपूर्वीकटमित्यत्र कटस्य तद्धितान्तशक्ति-ग्रहमात्रप्रयोज्योप-स्थितिविषयक्रियायाः कर्मत्वान्न षष्ठी। ईदृग्वृत्तिघटकतयैव

सकर्मकधातुप्रकृतिकभावाक्तान्तस्य कृतेत्यस्य प्रयोगेण कृदन्तशक्तया क्रियापस्थित्यभावात्। न च निष्ठान्तत्वात् 'न लोकेति' निषेधेनैव तत्र षष्ठ्यभावे नैतत्कृद्ग्रहणकृतनियमफलं युक्तमिति वाच्यम्। निष्ठान्त मात्रवृत्तिशक्ति-ग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मण्येव तेन षष्ठीनिषेधात्। न च कृद्ग्रहणकृतनियमेन कृतपूर्वीकटमित्यत्रेव तण्डूलाना पाचकतर इत्यादावपि षष्ठी न स्यात्, तण्डूलानां, पाचकतरेतितद्धितान्तनिष्ठशक्ति-ग्रहप्रयोजयोपस्थितिविषयक्रियानिरूपित-कर्मत्वसत्त्वादिति वाच्यम्। पाचकादेः पृथक्प्रयोगेण पाचक पदनिष्ठशक्तिग्रहस्याऽपि सत्त्वात्क्रियाः कृदन्तशक्तिग्रहप्रयोज्योप-स्थितिविषयत्वस्य निर्बाधेन षष्ठ्युपपत्तेः। कृधातोः कर्मणोऽवि वक्षया भावे क्ते कृतमिति ततः पूर्वशब्दसमभिव्याहारे कृतं पूर्वमिति विग्रहे 'सुप्सुपे'तिसमासे 'पूर्वादिनिः' 'सपूर्वाच्चेति' इनिः, ततः कर्मयोगविवक्षया योगविवक्षया कृतपूर्वीकटमिति सिद्ध्यति। अस्यैवं रीत्या साधुत्वे एतत्सूत्रस्थं भाष्यमेव मानम्। न च प्राक्कर्मणोऽन्वयाऽविवक्षायामपि कृतेत्यस्य कर्मणि साकाँक्षात्वेन सापेक्षात्वादसामर्थ्येन वृत्तिर्न स्यादिति वाच्यम्। वृत्तेः पूर्व कर्माऽन्वयाऽभावेनाऽसाकाँक्षात्वात्। न च 'नपुँसके भावेक्तः' इत्यनेन सकर्मकेभ्याऽपि धातुभ्यो भावे क्तसिद्धौ कर्मणोऽविवक्षया भावेक्तसाधनयत्नो व्यर्थ इति वाच्यम्। उक्तसूत्रेणाऽप्यकर्मकेभ्य एव क्तविधानादित्यलम्।।

उभयप्राप्तौ कर्मणि। पूर्वसूत्रेणैव सिद्धौ नियमार्थमिदं सूत्रम्। उभयोः प्राप्तिर्यस्मिन्निति बहुव्रीहिः, अस्याऽश्रयणादेकनिमित्तत्वलाभेनौदनस्य पाकः-ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकृर्तृकर्मणो षष्ठीप्राप्तौ नायं नियमः प्रवर्त्तते। प्राप्तिपदेनोभयोः प्रयोगे सत्येवाऽयं निषेध इति बोध्यम्।।

स्त्रीप्रत्यययोरकाकारयोर्नायं नियम इति। 'स्त्रियां क्तिन्' इत्यधिकारविहितयो रकाऽकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीतिनियमो न प्रवर्तते किन्तु कर्तर्यपि षष्ठी भवत्येव। नचैवं 'सुट् तिथोः' इति सूत्रे सुटा सीयुटो न बाध इति वृत्तिकृदुक्तमनुपन्नमिति वाच्यम्। कर्तुः करणत्वविक्षया तदपुपत्तेः।।

शेषे विभाषा उक्तसूत्रकृतनियमस्याऽयं विकल्प इत्येके। इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्त्यर्थमाह- केचिदविशेषेण विभाषामिच्छन्तीति। अकाऽकारभिन्नकृन्मात्रे इति तदर्थः।।

चतुर्थी चाशिषी। आशीर्विषयक्रियाऽन्वय्यर्थकात्प्रातिपदिकात्तद्द्वारके

आयुष्यादियोगे चतुर्थीषष्ठ्याविवित्यर्थं, क्रियाद्वारकसम्बन्धस्वीकारादेव एतदर्थकचतुर्थ्यन्तानां सुखहितादिभिर्न समासः देवदत्ताय सुखं भूयादित्यादौ देवदत्तायेस्य सुखादेश्च भूयादित्येतच्छब्दबोध्यक्रियायामन्वयेन परस्परसामर्थ्यात्। इति षष्ठी।।

आधारोऽधिकरणम्। 'कारके' इत्यधिकारातिक्रयाजनकेऽस्य प्रवृत्तिः। आधारश्चोपस्थित्वातिक्रयाया एव, तत्राऽऽधारपदेन न साक्षात्क्रियाऽऽधारस्य ग्रहणं किन्तु परम्परया तदाऽऽधारस्य पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधात्। परम्परा च व्याख्यानात् कर्तृकर्मद्वारैवेत्याह-कर्तृकर्मद्वारेति। उक्तश्च हरिणा, कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्। इति। न च कालस्य साक्षात्क्रियाधारत्वसम्भवे कथं परम्पराऽऽधारस्य ग्रहणमिति वाच्यम्। परम्पराऽऽधारग्रहण-स्यैवाऽनुभवसिद्धत्वात्। तस्य साक्षत्क्रियाऽऽधारत्वेऽप्याधारपदे स्वरितत्वप्रतिज्ञया परम्पराऽऽधारस्य ग्रहणम्। किञ्च कालस्य साक्षात्तदाधारत्वे कालः पचति भूतानीतिवत्कर्तृत्वमेव स्यात्। परम्पराऽधारग्रहणे सिद्धे (यस्य यद्द्वारा कारकत्वं तस्य तद्वारैव क्रियान्वयः) इति व्युत्पत्त्याः ऽस्याऽऽधारस्य कर्तृकर्मद्वारैव क्रियाऽन्वयः। अत एव, अक्षशौण्ड इत्यादौ समासः। यथा कटे शेते चैत्र इतिवाक्यात्कटाऽधिकारणकचैत्रकर्तृकं शयनमिति बोधस्तथाऽक्षाऽधिकरण-कशौण्डकर्तृका भवनक्रियेतिबोधात्साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्येन समाससंज्ञासिद्धिरिति भावः।

यत्तु कैयटनोक्तं अक्षेषु शौण्ड इत्यत्राऽऽसक्तपदाऽध्याहारेणाऽऽ-सक्तिक्रियाद्वारा सामर्थ्यात्समास इति तन्न हृदयग्राहि, भाष्यकृता तस्याऽर्थस्याऽनुक्तत्वात्। यत्र च क्रियावाचकपदत्र श्रूयते तत्राऽपि तदन्वययोग्यक्रियावाचकपदाऽऽध्याहारेण क्रियाऽऽधारत्वस्योपपादनी-यत्वान्मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्ति तथा मूलस्याऽऽधारत्वं बोध्यमिति दिक् ।।

औपश्लेषिकवैषयिकाऽभिव्यापकभेदादाधारस्त्रिधा। उपसमीपे श्लेष उपश्लेषस्तत्कृत औपश्लेषिकः। यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमिति 'तत्र च दीयते' इति सूत्रभाष्योक्तेः। अत एव, 'इको यणची'त्यत्राऽचीत्यौपश्लेषिकाऽऽधारे सप्तमी। कटे आस्ते स्थण्डिले शेते इत्याद्युदाहरणम्। कटाऽधिकरणिवैःकर्तृकाऽऽसनक्रिया

योग्यत्ववारणायावच्छेदकावच्छेदेन भावान्वयस्वीकारो बोध्यः।)

एतेन षष्ठ्यास्तादात्म्यमेवार्थः। तथा च गोतादात्म्यवत्कृष्णत्वावच्छेदेन संपन्नक्षीरासर गोतादात्म्यवत्संपन्नक्षीरात्वावच्छेदेन च कृष्णाया अन्वयाद्गवां सास्नावती संपन्नक्षीरा पशूनां कृष्णा संपन्नक्षीरेत्याद्यप्रयोग इत्यपास्तम्। विधेयतावच्छेदकावच्छेदेनोद्देश्यान्वयस्यादृष्टचरत्वात्।

नचास्तु संपन्नक्षीरादेरेवोद्देश्यत्वम्। पूर्वोपात्तत्वाभावात्। क्षत्रियाणां कर्णः प्रचुरं ददातीत्यत्रासंभवाच्च। धर्मिण्याख्यातस्य लक्षणायामप्युद्देश्यत्वेन बोधायोगात्। ददाति सुन्दरः इत्यतो दाता सुन्दर इत्यबोधात्। न च पचति गच्छतीत्यतः पक्ता गच्छतीति बोधस्य वैयाकरणैः स्वीकारान्नैवं, प्रथमांतपदोपस्थाप्य एवान्वयस्य नैयायिकैः स्वीकारात्। तथैव काव्यादौ प्रयोगदर्शनात्। जलेषु स्नेहवत् शीतस्पर्शवदिति प्रयोगापत्तेश्च। न च जलतादात्म्यवत्स्नेहवत्त्वेन न व्याप्यता तर्हि क्षत्रियाणां कर्ण इत्यस्यनापत्तेः। तस्मात्कर्णपदस्य कर्णतदन्यौ ददातीत्यस्य दानकृतितदभावावर्थ इति पूर्ववदेवान्वयबोधः।

परे तु गोसमुदायादेकदेशस्य कृष्णायाः पृथक्करणं कृष्णेतरगोभेदानुमापकत्वं तत्स्वरूपयोग्यतानिर्धारणम्। तच्चेत्वृःष्णेतरगोभेदव्याप्यतवं कृष्णेतरगवावृत्तित्वपर्यवसितं षष्ठ्यर्थः, संपन्नक्षीरात्वे एकदेशे व्युत्पत्तिवैचित्र्यादन्वेति। कृष्णेतरगोभेदव्याप्य-त्वकृष्णेतरगोभिन्नत्वमेव वा पृथक्करणं संपन्नक्षीरायामवच्छेद-कावच्छेदेनान्वेति। तेन पदार्थेषु द्रव्यंगुणकर्मान्यत्वविशिष्टसत्तावत् पदार्थेषु जातिमत्सत्तावदित्यादिकं सूपपादम्। षष्ठ्यास्तादात्म्यार्थक-तयावच्छेदकावच्छेदेन भावान्वयस्यापि स्वीकारात्। घटेषु कृष्णा संपन्नक्षीरा गोषु कृष्णाशुक्लान्यतरा संपन्नक्षीरेत्यादेर्व्युदासः। एतल्लाभैव तत्तद्भिन्नवृत्तिधर्मवत्परं समुदायपदमित्याहुः।

(षष्ठ्यास्तादाम्यार्थकतया समुदायतादात्म्यवन्निर्धार्यावच्छेदकावच्छेदेन निर्धारणप्रयोजकरूपान्वयलाभाय, निर्धार्येतरसमुदायावृत्तिरूप-निर्धार्येतरसमुदायभेदानुमितिस्वरूपयोग्यत्वरूपपृथक्करणनिर्धारणस्य लिङ्गविधया इतरभेदानुमितिरूपनिर्धारणप्रयोजवे पदार्थैकदेशेऽन्वयलाभाय च निर्धार्यतदितरवृत्तिधर्मवत्परसमुदायपदोपादानम्। प्रागुक्तान्वयलाभयोः किं प्रयोजनमिति चेत् - पार्थिवानां स्नेहवत् शीतस्पर्शवज्जलानां स्नेहवच्छीतस्पर्शवदित्यनयोरयोग्यत्वसंपादनमेव। समुदायतादाम्त्य-

न्निर्धार्यतावच्छेदकदकावच्छेदेन निर्धारणप्रयोजकरूपभावान्वयस्वीकारस्य तु गवां कृष्णाशुक्लान्यतरा संपन्नक्षीरेत्यस्यायोग्यत्वसंपादनमित्याहुः।)

यत्तु यस्मान्निर्धार्यते, यश्च निर्धारणहेतुः, यश्चैकदेशो निर्धार्यते एतन्नियतसंनिधावेव निर्धारणे षष्ठी तत्रैव समासनिषेध इति तन्न। तथा सति नरशूरः क्षत्रिय इत्यस्याप्यनुपपत्तेः। (पुरुषपदस्य कृष्णत्वविशिष्टे रूढिसत्त्वे पुरुषोत्तम इत्यस्याप्यनापत्तेश्च।) पुरुषोत्तम इत्यस्य योगेन स्वेतर-पुरुषावृत्त्युत्तमत्वविशिष्टार्थकतयानतिप्रसङ्गात्केवल-यौगिकत्वमेवेत्यन्ये। नच पुरुषश्चासावुत्तमश्चेति कर्मधारयोऽस्तु तर्ह्युत्तमपुरुषप्रयोगापत्तेः। जातिवाचकप्रयोगे गुणक्रियावाचकस्य पूर्वोपात्तत्वनियमात्। नीलोत्पलमित्यादौ तथा व्यवस्थितेः। अन्यत्र त्वनियमः। यथा खञ्जकुब्जः कुब्जखञ्ज इत्यादौ।

यत्तु पुरुषेषूत्तम इति सप्तमीसमास एवात्रेति तन्न। तथा सति सप्तमीसमासेन नरक्षत्रियः शूरतम इत्यादिप्रयोगापत्तेः। न चेष्टापत्तिः न निर्धारण इति निषेधवैयर्थ्यापत्तेः। निर्धारणे तादृशप्रयोगस्या-साधुत्वज्ञापकतयैव तत्सार्थकत्वात्।

परे तु सप्तमीसमास एवायं स्वरभेदनियामकषष्ठीसमासनिषेधकत्वेन निषेधसाफल्यमित्याहुः। पञ्चमीसमासोऽत्रेत्यन्ये।।

## अथ बहुव्रीहिः

**नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासो बहुव्रीहिः।**

अत्र संख्यावाचकपूर्वदकान्यत्वे सतीति विशेषणं देयम्। तेन पञ्चफलीत्यादिद्विगौ नातिव्याप्तिः। राजपुरुष इत्यादिवारणायोत्तरेति। नच कण्ठेकाल इत्यत्राव्याप्तिः, कालपदे लक्षणायाः समासाप्रयुक्तत्वादिति वाच्यम्। कालरूपप्रकारेण लक्षणाया अतत्वेऽपि कालसंबन्धित्वेन लक्षणायास्तत्वात्। (इदमुपलक्षणम्। कण्ठावच्छेदेन कालरूपविशिष्टे प्रकृते कालपदस्य लाक्षणिकतया तादृशलक्षणायाः समासप्रयुक्तत्वम-व्याहतमेवेति बोध्यम्।) वस्तुतो न देयमेव समासप्रयुक्तेति व्यर्थत्वात्।

नन्वेवमपि स्थिरमन्युरित्यादिवत्स्थिरमत्सर इत्याद्रियोगात्तत्राव्याप्तिः। नचात्र कर्मधारयः। स्वरभेदार्थमपि बहुव्रीहेः स्वीकारात्। न च मत्सरपदस्य शुक्लादिपदवद्गुणिनि लक्षणा। 'गुणिलिङ्गास्तु तद्वति' इत्यत्र तद्वति शुक्लादिमतीत्यर्थात्। गुणिनि शुक्लादिपदसंकेतग्रहस्य गुणसंकेतग्रह-प्रयोज्यतया

वटादिपदस्य ग्रामादाविव शुक्लादिपदस्य गुणिनि शक्त्यभावो मत्सरपदस्य तु मिथोनिरपेक्षग्रहशक्तिग्रहकयोर्द्वेषतद्वतोद्वयोरपि शक्तत्वात् 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इति नामार्थमध्यपाठाच्च। तेन मत्सरपदस्यापि मत्सरशबदार्थपरामर्शकतत्पदघटिततद्वत्पदेन शक्तिग्रहेऽपि न क्षतिः। मित्रा अप्येवमिति चेन्न। श्रुतिसिद्धमुखविशेषशक्तिकस्वः पदस्य निरूढलक्षणया नाकादिपर्यायत्ववन्मत्सरपदस्यापि निरूढलक्षणया नानार्थमध्यपठितत्वसंभवात्। कालादिपदवन्मत्सरपदस्य मत्सरसंबधित्वेन लक्षणा निष्प्रत्यूहेत्यपि बोध्यम्।

स चान्यपदार्थप्रधानः। विग्रहवाक्याद्यत्पदार्थे यत्प्रतियोगि-कसंबन्धाश्रयत्वं भासते तत्पदार्थवृत्तिसंबन्धप्रतियोगिनि तत्र लक्षणास्वीकारात्। तथाहि- चित्रा गौर्यस्येति विग्रहवाक्याच्चित्राभिन्ना गौश्चैत्रादिस्वत्वाश्रय इत्यन्वयबोधच्चित्रगुरित्यादिसमासे गोपदे चित्रगोवृत्तिस्वत्वप्रतियोगिनि लक्षणा। चित्रपदं तात्पर्यग्राहकम्। गोपदे गोस्वामिलि लक्षणा। एकदेशे गवि चित्राभेदान्वयो व्युत्पत्तिवैचित्र्यादित्यन्ये। गोपदादिना शक्त्या गवादिः, लक्षणया स्वाम्यादिर्बोध्यते। एकपदार्थयोश्चात्र परस्परमन्वयो व्युत्पत्तिवैचित्र्यादित्यपरे। चित्रापदं चित्रास्वामिपरम्। गोपदं गोस्वामिपरम्। चित्रास्वामी गोस्वामीति बोधः। चित्रात्वेन गोस्वेन चैकस्येव भानम्। व्यक्तिवचनानामिति न्यायादिति नातिप्रसङ्गइति तु तादृशंबोध-स्यानानुभविकत्वात्, शोभनांचित्रगुरित्यादित्रिपदबहुब्रीहावसंभवाच्च न युक्तम्। अत्र हि चित्रापदस्य चित्रास्वामिनी लक्षणायां शोभनानान्व-यानुपपत्तिः। शोभनपदस्यापि शोभनस्वामिनि लक्षणायामत्यन्तमनुभवविरोध इति बोध्यम्।

आरूढो वानरो यमित्यत्र आरुहेरूर्ध्वदेशावच्छिन्नसंयोगानुकूला क्रियात्तस्याश्रयो, द्वितीयाया. आधेयत्वमर्थः। तथाच वृक्षवृत्त्यु-परिदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर इत्यन्वयधीः। आरूढवानर इति समासे तु आरोहणकर्तृवानरसंबन्धी वृक्ष इत्यन्वयधीः। संबन्धः स्वकर्तृकारोहणकर्मत्वम्।

चैत्रेण दत्तं धनं यस्मै इत्यत्र तु चैत्रकर्तृकंयत्संप्रदानकप्रदानकर्म धनमित्यन्वधीः। चैत्रदत्तधन इति समासे चैत्रपदस्य चैत्रकर्तृकपरत्वाचैत्र-कर्तृकप्रदानकर्मधनसंबन्धी मैत्र इति बोधः। संबन्धः स्वकर्मकप्रदान-संप्रदानत्वम्। एवमन्यत्रापि। एष समानाधिकरणबहुब्रीहिः।

व्यधिकरणबहुब्रीहिस्तु चक्रपाणिरित्यादौ। चक्रं पाणौ यस्येति

विग्रहवाक्याद्यत्संबन्धिपाणिवृत्ति चक्रमित्यन्वयधीः। समासात्तु चक्रयुक्तपाणिसंबन्धीति धीः।

तद्गुणातद्गुणसंविज्ञानभेदादपि बहुव्रीहेर्द्वैविध्यम्। तत्राद्यो भूवादयो धातवः, चैत्रादीन्भोजयेत्यादौ। भूवाऽऽदिः प्रथमपठितो येषां ते, चैत्र आदि प्रधानो येषामिति विग्रहवाक्याद्भुवाभिन्नः प्रथमपाठितो यत्संबन्धी, चैत्राभिन्नः प्रधानो यत्संबन्धीत्यादिधीः। समासात्तु भूवाभिन्नप्रथम-पठितसंबन्धी, चैत्राभिन्नप्रधानसंबन्धीति धीः, संबन्धः स्वपाठप्राथम्यस्य स्वनिष्ठप्राधान्यस्य च अवधित्वम्। अत्र भूवाभिन्नप्रथमपठित-संबन्धित्वचैत्राभिन्नप्रधान-संबन्धित्वादिना आदिपदे लक्षणा, लक्ष्यतावच्छेदकस्यापि भूवादेर्विशेष्या-न्वयिधात्वादिनाऽन्वयात्तद्गुणम्, लक्षणाया अजहत्स्वार्थात्वं च बोध्यम्।

परे तु लम्बकर्णमानयेत्यादौ कर्णादेरप्रधानत्वेन भानस्यानुभविकत्वा-दस्तूक्ता रीतिः। भूवादय इत्यादौ तु गणपठितत्वनिमन्त्रितत्वादिनैव लक्षणा प्राधान्येनैव शक्यलक्ष्ययोर्विधेयान्वयानुभवात्। काकेभ्यो दधि रक्ष्यता-मित्यादाविव। तद्गुत्वं तु लम्बकर्णभूवादिसाधारणं लाक्षणिकपदतत्समभिव्या-हृतपदान्यतरशक्य-योर्लक्ष्यान्वयिना-ऽन्वयमात्रादेवेत्याहुः।

अन्त्यः चित्रगुमानयेत्यादौ। अत्र चित्रगवस्वामित्वादिना गवादिपदे लक्षणायां गवादेरन्वयप्रदेशेऽपि न विशेष्यान्वयिनान्वयो लम्बकर्ण-मानयेत्यादावन्वय इत्यत्र शब्दस्वाभाव्यमेव तंत्रमिति दिक्।

क्वचित्प्रथमान्तविग्रहवाक्योऽपि बहुव्रीहिः। यथा सह पुत्रेणागतः सपुत्रकः, सह लोम्रा वर्तते सलोमकः। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र न समासोऽनभिधानात्।

एवं केशेषु गृहीत्वा प्रवृ युद्धं केशाकेशि। दण्डैश्च दण्डैश्चं प्रहृत्य प्रवृत्तं युद्धं दण्डादण्डीत्यादिरिति दिक् ।

यत्र विग्रहेवाक्येऽन्यपदार्थः प्रधानः सोऽपि तथा। यथा दक्षिणस्याः पूर्वास्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा दिक् । दक्षिणादिक्संबन्धिनी पूर्वादिक्संबन्धिनीत्यन्वयधीः। द्वौ वा त्रयो वा द्वित्रा इत्यादिकमपि बहुव्रीहिभेदः। वस्तुतो द्वित्रास्तिष्ठन्तीत्यादितो द्वौ वा त्रयो वा तिष्ठन्तीति न संशयः। शब्दस्य तत्रासामर्थ्यात्। द्वौ त्रयस्तिष्ठन्तीति च न निश्चयः, द्वयोः सत्त्वे भ्रमत्वापातादिति द्वित्र्यन्यतरे सन्तीति बोधः। एवं च द्वित्रिर्वा (?)

परिमाणमेषादिति विग्रहवाक्ये द्वित्वत्रित्वान्यतरविशिष्टे, द्वित्रा इति समासे च द्वित्वत्रित्वान्यतरसंख्याविशिष्टे लक्षणा। (अत्रोत्तरत्र च परिमाणशब्दः संख्याबोधको बोध्यः।) एवं च पञ्च षड्वा परिमाणमेषां पञ्चषा इत्यादावपीति। अन्यपदार्थप्राधान्यमिति दिक् ।।४।।

## बहुव्रीहिसमासप्रकरणम् विशेषेणविचार्यते

शेषो बहुव्रीहिः। असर्वोपयोगार्थकाच्छिषेः कर्मणि घञा निष्पन्नस्य सूत्रघटकशेषपदस्योपयुक्तादन्यपरत्वेन यस्य पदस्याऽर्थस्य वा पूर्वत्रोपयोगस्तस्य पूर्वमप्रसिद्धिमभिधाय भाष्यकृता सिद्धान्तितं त्रिकतः शेष इत्येतन्मूलकव्याख्यानात् शेष इत्यस्य प्रथमान्तत्वाच्च तेन प्रथमान्ताऽपेक्षशेषस्यैव ग्रहणमिति बोध्यम्। पदतः शेषस्य ग्रहणे सामान्यतो विशेषतो वा यस्य पदस्योपयोगस्तदन्याऽप्रसिद्धिः, सुप्सुपे' त्यत्र सामान्यतः द्वितीयाश्रिते' त्यादौ विशेषत उपयोगः। अर्थोऽपि, पूर्वपदार्थप्रधानत्वेऽन्य-पदार्थप्रधानत्वे चाऽव्ययवीभावः। उत्तरपदार्थप्रधानत्वे तत्पुरुषः, प्रसिद्ध एव, अतो यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेष इति विवक्षितमितिभावः। सष्शेषः प्रथमान्तमिति। ननूक्तप्रकारेणप्रथमान्तस्य बहुव्रीहिरिति सिद्धम्, तत्कथं, (प्रादयोगताद्यर्थे प्रथमया) इति तत्पुरुषसमासप्रकरणस्थवार्त्तिकेन प्रगत आचार्य इत्यादौ प्रथमान्तस्य तत्पुरुषसमासविधानादिति चेन्न। उक्तवार्त्तिकेन प्रथमान्तेन प्रादीनामुक्तसमासविधानेऽपि प्रथमान्तस्योक्तसमासाविधानामिति भावः। न च कण्ठे काल इत्यादौ व्यधिकरणपदस्यापि बहुव्रीहिदर्शना-त्प्रथमान्तस्यैवोक्तसमास इत्ययुक्तमिति वाच्यम्। तत्र तत्र ज्ञापक-साध्यबहुव्रीहेर्दृष्टत्वात्।।

३- अनेकमन्यपदार्थे। अन्यस्य समस्यमानपदातिरिक्तस्य पदस्यार्थोऽन्यपदार्थस्तत्र विद्यमानस्याऽनेकप्रथमान्तस्य वा समासः स च बहुव्रीहिसंज्ञक इत्यर्थः। अन्यपदार्थ इत्यत्राऽन्यपदं भेदविशिष्टार्थकं ततश्च भेदस्य प्रतियोगिनी साकाँक्षत्वाच्छेषपदोपस्थितस्य प्रतियोगित्वेन तत्राऽन्वयाद्द्वितीयान्ताद्यर्थ इति लब्धम्। तथा च, स्वनिष्ठ-प्रतियोगितानिरुपितभेदविशिष्टार्थकपदार्थे विद्यमानस्या-ऽनेकप्रथमान्तस्य समास इति फलितार्थः।।

अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति। 'अनेकमन्यपदार्थे' इत्यनेनाऽनेकप्रथमान्तस्य समासविधानात्तत्राऽन्यपदार्थपदेन प्रथमान्ताथा-

'तिरिक्तस्यैव ग्रहणं युक्तमित्येतत्फलितन्तदिति भावः।

समानाधिकरणानामिति च फलितमिति। समानाधिकरणत्वञ्च, एकार्थबोधजनकत्वम् अनेकप्रथमान्तस्थले अभेदाऽन्वयप्रयोजकीभूत-समानविभक्त्यन्तविशेषणवाचकपदसत्वादर्थादेव समानाधिकरण-त्वोपपत्तिरिति तदाशयः। अनेकप्रथमान्तस्य समास विधानादेकप्रथमान्तस्य तदभाव इत्याह- प्रथमार्थे तु नेति। सूत्रे प्रथमान्तमित्यस्य फलमाह- पञ्चभिर्भुक्तमस्येति।

प्रदिभ्यो धातुजस्येति। प्रादिभ्यः परं यद्धातुजं पदं तदन्तस्य पदान्तरेण समासः पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य वा लोपइत्यर्थः। प्रपर्ण इत्युदाहरणम्।।

नञोऽस्त्यर्थानामिति। नञः परं यदस्त्यर्थवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिः, अस्त्यर्थवाचिनाम्पदानाम्वा लोप इत्यर्थः। अविद्यमानः पुत्रोऽपुत्रः इत्युदाहरणम्। तत्राऽस्त्यर्थानामित्यस्याऽसत्त्वे अनुपनीतपुत्र इत्यत्रापि समासोत्तरपदलोपयोरापत्तिरतस्तत्। नञोऽसत्त्वे निर्विद्यमानपुत्र इत्यत्राप्युक्तापत्तिः। नन्विह सुपेत्यस्याऽसम्बन्धेऽपि सुबित्यस्य, सम्बन्धादस्तीत्यस्य तिङन्तत्वेन समासो न स्यादत आह-अस्तीति विभक्तिप्रतिरूपकमव्ययमिति।।

अत्र केचित्। चित्रा जरती गौर्यस्येति विग्रहे सूत्रेऽनेकेतिपदसत्त्वेन त्रिपदबहुव्रीहिः तत्र सूत्रेणोत्तरपदे पुंवत्त्वविधानादुत्तरपदशब्दस्य समासस्य चरमावयवे रूढत्वेनोत्तरपदस्य मध्यमपदेन व्यवधानात्प्रथमस्य न पुंवद्भावः। गौरूपोत्तरपदे जरतीत्यस्य द्वितीयस्यापि न सः। पूर्वपदशब्दस्य प्रथममावयवे रूढत्वेन तस्य पूर्वपदत्वाऽभावात् तथा च चित्राजरतीगुः। जरतीचित्रागुर्वा। दीर्घातन्वीजङ्घः। तन्वीदीर्घाजङ्घ इत्येवेत्याहुः। वस्तुतस्तु यथा द्वन्द्वसमासप्रकरणस्थे 'आनङ् ऋतो द्वन्द्वे' अत्र सूत्रे होतृपोतृनेष्टोद्गातार इति समर्थसूत्रस्थभाष्यप्रयोगान्न पूर्वपदाक्षेपः। अत एव भाष्यकृदुदाहृतस्य तृतीयस्यानङ सङ्गतिः। अन्यथा पूर्वपदशब्दस्य प्रथमावयवे रूढत्वात्तत्र तृतीयस्य पूर्वपदत्वाऽभावात्तदसङ्गतिः। तथैवाऽत्रापि पूर्वपदाक्षेपा ऽभावेनोपान्त्यस्य पुंवत्त्वं स्यादेवेति चित्राजरद्गुरित्येव प्रयोगः। अत्र सूत्रे पूर्वपदसम्बन्धाऽभावादेव, चित्राजरत्यौगावौ यस्येति द्वन्द्वगर्भेऽपि बहुव्रीहि चित्राजद्गुरिति भाष्यं संगच्छते। ननु तत्र पूर्वपदे पुंवत्त्वेन कुतोन टाब्निवृत्तिरिति चेन्न। द्वन्द्वान्तर्गतस्य जरच्छब्दस्योत्तरपदत्वेऽपि समानाधिकरणाऽभावेन तदनिवृत्तेः। नचैवमपि द्वन्द्वात्मकपूर्वपदस्य

समानाधिकरणोत्तरपदपरत्वेन सति पुंवद्भावे तदवस्थ एवोक्तदोष इति वाच्यम्। स्त्रीप्रत्ययप्रकृतिभूतयोर्द्वन्द्वान्तर्गतचित्रजरच्छब्दयोरेकैकस्य भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकपूर्वपदस्य भाषितपुंस्कत्वाऽभावेना-दोषादितिभावः। कर्मधारयपूर्वपदे तु पूर्वपदान्तर्गतोत्तरपदाश्रयणेन प्रथमस्योत्तरपदाश्रयणेन द्वितीयस्य च पुंवत्त्वे जरच्चित्रगुः। कर्मधारयोत्तरपदे तु जरती चासौ गौश्चेति विग्रहे 'गोरतद्धित' इति टचि टित्वान्ङीपि जरद्गवी, अस्य चित्राशब्देन बहुव्रीहौ चित्राजरद्गवी यस्ये तिविग्रहे 'नद्यृतश्चे'ति बक्ष्यमाणसूत्रेण कपि चित्रजरद्गवीक इति प्रयोगः। सूत्रे भाषित पुँस्कादित्यस्याऽसत्त्वे गङ्गाभार्य्यं इत्यत्र भार्य्यारूपोत्तरपदपरत्वेन पुवंद्भावापत्तिः। नच गङ्गाशब्दस्य नित्यस्त्रीत्वान्नोक्तापत्तिरिति वाच्यम्। सूत्रेण स्त्रीरूपाऽर्थकबोधस्य शब्दस्य पुंस्त्वरूपार्थातिदेशकरण-सामर्थ्यात्स्त्रीत्वरूपार्थबोधकत्वेऽपि गङ्गाशब्दस्योक्तापत्तेर्दुर्वारत्वादिति भावः।।

वृद्धिनिमित्तस्य च तद्धितस्येति। ननु वृद्धिशब्देन विहिता या वृद्धिरित्यर्थलाभः कथमिति चेन्न। व्याख्यानेन तल्लाभात्। तथाहि यः सकलाया वृद्धे र्निमित्तं यस्त्रयाणामाकारैकारौकाराणां निमित्तमितिभाष्य-प्रामाण्याद्वृद्धिशब्दस्यावृत्तिः। तथा च सुकर एवोक्तार्थलाभः।। वृद्धिम्प्रति वृद्धिशब्देन फलोपधानाभावादिह पुंवदिति। वृद्धिशब्देन ताम्प्रतिस्वरूपयोग्यस्वीकारे तु स्त्रोघ्नौ भार्य इत्यत्र वृद्धिशब्देन विहिताया वृद्धेरौकाररूपाया हेतुभूततद्धिस्वरूपयोग्यत्वं वैयाकरणभार्य इत्यत्रापि तद्धितस्याऽणः सत्वान्निषेधापत्तिः। फलोपहितस्वीकारे तु नापत्तिः। तथाहि फलोपहितस्वरूपयोग्यभेदेन द्विविधं निमित्तं तत्राऽऽद्यं कार्य्याव्यवहित-पूर्वकालाऽवच्छेदेन कार्याधिकरणवृत्त्वि सति कार्यसमानाधिकरणा-ऽत्यन्ताऽभावीयप्रातियोगिताऽनवच्छेदकधर्मवत्त्वरूपम्। अन्त्यश्च सत्यन्तविशेषणरहितम्। तथा च वृद्धिरूपकार्यसमानाधिकरणे उत्तप्रयोगेऽणः सत्वादणतिरिरितिक्ताऽभावीयप्रतियोगिताऽनवच्छेदका-ऽण्त्वधर्मवत्ताया उभयत्र सत्त्वेपि वृद्धिरूपकार्य्याव्यवहित-पूर्वकालाऽवच्छेनोक्तरूपकार्य्याधिकरणे स्त्रौघ्नीत्यादिप्रयोगे वैयाकरणघटकस्याऽणोऽसत्वान्नापत्तिः। अत्र प्रवाहणस्य परस्य वृद्धिर्न पूर्वस्य तु वेत्यर्थके 'प्रवाहणस्ये'ति सूत्रे प्रवाहणेयी भार्य इत्यत्र वृद्धिनिमित्तस्य चेति पुंवत्त्वनिषेधो न प्राप्नोति माभूदेवं जातेरिति भविष्यतीति भाष्योक्तेरेवाऽत्र प्रमाणत्वं बोध्यम्। तावद्भार्य इत्यत्रत्यदोषव्यावृत्तये

वृद्धेर्निमित्तं यस्मिन्नित्यर्थाश्रयणपरभाष्यादुक्तप्रयोगे वृद्धिनिषेध इष्ट एवेति शेखरकृदिति दिक् ॥

ननु 'ओरोदि त्येव लाघवात् सूत्रमस्तु गुणग्रहणघटिसूत्रकरणे संज्ञापूर्वकविधित्वेन गौरवाद्धेयम्। नच गुणग्रहणाघटितसूत्रकरणेऽपि भस्य तद्धिते इत्येवंरूपसंज्ञापूर्वकत्वस्य सत्वाद्गौरवाद्धेयमित्ययुक्तमिति चेन्न। यत्र संज्ञारूपं विधेयसमर्पकं पदं तस्यैव संज्ञापूर्वक विधित्वात्प्रकृते भस्य तद्धिते इति सत्त्वेऽपि संज्ञारूपविधेयसमर्पकपदत्वाऽभावेनादोषादिति चेन्न। गुणग्रहणस्य सामर्थ्यात् (संज्ञापूर्वकोविधिरनित्यः) इत्यर्थज्ञापनेन साफल्यात्। तेन स्वायम्भुवमित्यादिसिद्धिः। ओरोदितिन्यासे ओदित्यत्र तकारस्योच्चारणार्थत्वात्तपरत्वे फलाऽभावान्न 'तत्परस्तत्कालस्ये'त्यस्य प्रवृत्तिः। किञ्च 'ओरो' इत्येवास्त्विवति भावः।।

पूर्वपदात्संज्ञायामगः। ननुसूत्रेऽग इत्यस्य सत्त्वाद्गकारव्यवधाने पूर्वपदस्थनिमित्तात्परस्य नस्य णत्वन्नेत्यर्थे ऋचामयनं ऋगयनमिति षष्ठीतत्पुरुषेणत्वन्न भवतीत्याशयेनोदाहरति-अगः किमिति। ऋगयनमिति। वस्तुतस्तु नाऽग्ग्रहणस्योक्तस्थलीयणत्वापत्तिनिवृत्तिः फलम्, तस्या अणगयनादिभ्यः' इति सूत्रे ऋगयनशब्दपाठसामर्थ्यान्निपातेनैव निवृत्तेरिति व्यर्थमेव तदिति भाष्ये स्पष्टमित्याह- अणृगयनादिभ्य इत्यादि।।

उपसर्गाद्बहुलम्। नन्वस्य सूत्रस्याऽष्टाध्याय्यामपठितत्वात्कुत उपलब्धिरिति नाशङ्क्यम्। 'उपसर्गादनोत्परः' इत्यत्राऽनोत्पर इति परित्यज्य तत्स्थाने बहुलग्रहणं संयोज्य भाष्यकृतैव पठितत्वात्। सत्यस्मिन् नसो नस्योपसर्गस्थनिमित्तात्परस्य बहुलं णत्वमित्यर्थे प्रणोनयेत्यत्रा-ऽव्याप्तिवारणं प्रनः पूषेत्यादावतिव्याप्तिवारणञ्च फलमित्यलम्।।

ननु उक्तसूत्रे (वेर्ग्रोवक्तव्यः) (ख्यश्चे)ति वार्त्तिकद्वयस्य सत्त्वात्ताभ्यां ग्रख्ययोरन्यतरस्यैव विधानाद्विनसेत्यस्योपपत्त्यसम्भवादुक्तप्रयोगघटितस्य भट्टिपद्यस्य कथमुपपत्तिरित्याशयेनाशङ्कते- कथं तर्हि विनसा हतवान्धवेति भट्टिरिति। समाधत्ते- विगतयेति। एवञ्च विनसेति पछन्नसूत्रेण नसादेशेन तृतीयान्तन्नतु प्रथमान्तमिति न कश्चिद्दोष इति भावः।।

इनः स्त्रियाम्। इः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया तदन्तविधौ स्त्रियां विद्यमानादिन्नन्तबहुव्रीहेः कवित्यर्थः। तथाच उक्तपरिभाषया

दण्डिन्नित्यस्यैवेन्नन्तत्वाद्बहुदण्डिन्नित्यस्य तत्त्वाऽभावात्कप् न स्यादित्यत आह- अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्तीति। इति बहुव्रीहिः।।

४- चार्थे द्वन्द्वः। 'अनेकमन्यपदार्थे' इत्यतोऽनेकमियस्यानुवृत्त्या चस्याऽर्थे विद्यमानानामनेकप्रथमान्तानां द्वन्द्वसमासो भवतीत्यर्थः उक्तसूत्रादनुवृत्तस्याऽनेकमित्यस्य स्रग् वाग्दषदं होतृपोतृनेष्टोद्गातार इत्यादौ यथायथं समासान्तस्याऽनङश्च मध्येऽप्रवृत्तिरन्ते एव प्रवृत्तिश्च फलम्बोध्यम्। अत्र केचित् चैत्रेण मैत्रेण च कृतमिति वाक्येऽवयवकर्तृत्वस्यैव प्रतीत्या चैत्रमैत्राभ्यां कृतमिति समासे समुदाय कर्तृत्वसयैव प्रतीत्या चैत्रेण मैत्रेण च कृतमिति वाक्यस्य समाससमानार्थकत्वाऽभावेन चैत्रेण मैत्रेणत्यस्य चैत्रमैत्राभ्यामिति समुदायसाधुत्वप्रयोजकवाक्यत्वाऽभावात्प्रथमान्तानामेव द्वन्द्वो नतु परिनिष्ठितविभक्त्यन्तानामिति। वाक्यस्य समुदायसाधुत्व-प्रयोजकत्वाऽभावादेव यदग्नये च प्रजापतये चेत्यादौ व्यस्ते प्रत्येकं देवतात्वप्रतीतिः अग्नीषोमाभ्यामित्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था सिद्ध्यति। वाक्यस्याऽपि समुदायसाधुत्वप्रयोजकत्वे तु समास इव वाक्येऽपि समुदाये देवतात्वप्रतीतिरेव स्यात्। अत एव (ङिसम्बुद्ध्योरनुत्तरपदे) इति वार्तिके सम्बुद्धिग्रहणमिहाऽनावश्यकं राजवृन्दारकेत्यादौ सम्बुद्ध्यन्तानां समासः इह तावत्समाससामानार्थकेन वाक्येन भवितव्यम्। यश्चेहार्थो वाक्येन गम्यते नासौ कदाचित्समासेन गम्यते अवयवसम्बोधनं वाक्येन गम्यते समुदायसम्बोधनं समासेनेति 'न ङिसम्बुद्ध्योरि'ति सूत्रे भाष्ये उक्तम्। सम्बोधन विभक्त्यन्तस्य सम्मुखीभावफलकत्वात्प्रत्येकमेव सम्मुखीभावप्रतीत्या क्रियाऽन्वयाऽभावेन परस्परमसामर्थ्यामिति तदाशयः। यदा समाना ऽधिकरणस्थलेऽपि न समासस्तदा व्यधिकरणानां सुतरां न द्वंन्द्व इति परिनिष्ठतविभक्त्या समासेऽपि राजपुरोहिताविति द्वन्द्वोदाहरणम्, एवञ्च व्यधिकरण-तृतीयाऽद्यन्तानामपि क्रियादावेवाऽन्वयेन क्रियाजनकत्व-रूपकारकत्वस्य प्रत्येकमेव बोधान्न वाक्यसमासयोस्तु ल्यार्थत्वमित्यलम्।

मिलितानामन्वय। इतरेतरयोग इति। परस्पराऽपेक्षाणामुद्भूताऽवयव-भेदसमूहरूपाणमेकस्मिन्धर्मावच्छिन्नेनाऽन्वय इति तदर्थः। तेन नीधातोः संयोगजनकव्यापाराऽनुकूलव्यापारवाचकत्वेन द्विकर्मकत्वेऽपि अजां ग्रामं नयतीत्यादौ नाऽपि चकारप्रयोगो नाऽपि समास एकधर्मावच्छिन्ने-ऽन्वयाऽभावात्।

अत एवऽत्राऽनेकचकारप्रयोगः। एत्र मिलितानामन्वयस्त-स्त्रेतरेतरयोगस्तादृशसमूहश्चार्थ इत्यन्वयः। समूहे उद्भूताऽवयवभेदत्वञ्च, अवयवगतसंख्यारोपवत्त्वं प्रत्यवयं समूहरूपात्वाऽऽरोपो वा। समूह इति। अनुद्भूताऽवयवभेदः समूह इत्यर्थः। तत्रेतरतरयोगे उद्भुताऽवयवभेदसमूहस्य प्रतीत्या प्रवृत्तिधर्म रूपमेव प्रवृत्तिनिमित्तम्। समाहारे तु अतिरिक्तत्वेनैव समूहस्य भानात्समूहत्वं प्रवृत्तिनिमित्तमिति विशेषः। ईश्वरं गुरुञ्च भजस्वेत्यादौ न समास असामर्थ्यादिति। अनेकसुबन्तानां चार्थे वृत्त्यभानेनैकार्थीभाव-रूपसामर्थ्याऽभावादित्यर्थः। समुच्चयस्थले च समभिव्याहृतस्यैकस्य सुबन्तस्य चार्थे वृत्तावपि अपरस्य चार्थे वृत्त्यभावादनेकस्य चार्थे वृत्त्यभावः। अन्वाचय तु उभयोरपि चार्थे वृत्त्यभाव इति भावः।।

ननु उद्भुताऽवयवभेदविवक्षणे इतरेतरयोगद्वन्द्वे द्विवचनबहुवचनस्य, अनुद्भुताऽवयवभेदविक्षणे समाहार द्वन्द्वे समुदायगतैकत्वादेकवचनस्यचोप-पत्तावेकवद्भावविधायकप्रकरणमन्तरापीति व्यर्थमेवैतत्प्रकरणम्। इतरेतरयोगद्वन्द्वे नेष्ट एकवद्भावो लक्ष्यानुरोधादिति चेन्न। प्राण्यङ्गादीनां समाहार एव नेतरेतरयोग इति नियमार्थत्वेन सार्थक्यात्। तथा च नैभ्यो बहुवचनद्विवचना-पत्तिरुद्भूताऽवयवभेदविवक्षयेतिबोध्यम्। तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्व' इति सूत्रे बहुवचनग्रहणसामर्थ्यात्प्राणयङ्गज्ञदीनामेव समहार इति विपरीतनियमो नानाऽऽशङ्कनीयः तथा हि एकवचनस्य द्विवचनाऽभावो बहुवचनग्रहणप्रयोजनम् विपरीतनियमे तु प्राणङ्गाद्यतिरिक्तस्य समाहारत्वाऽभावादेकवचनाऽनुत्पत्त्या बहुवचनस्यैव द्विवचनसिद्धौ पुनर्बुहुवचनग्रहणं व्यर्थमेव स्यादित्यभिप्रायेणाशंक्य समाधानमाह-समाहार स्यैकत्वादेकत्वे सिद्धे निमार्थ प्रकरणमिति। नियमस्तूपरिष्टादुक्तएवेति बोध्यमित्वलम्।।

ननु 'विभाषावृक्षमृगेति'ति सूत्रेऽप्राणिनो ग्रहणं व्यर्थमिति चेन्न। तस्य 'जातिरप्राणिनामि'ति सूत्रप्राप्तनित्यद्वन्द्वस्य विकल्पविधानेन सार्थक्यादित्याह-विभावृक्ष इति सूत्र इति।

ननु विभाषा वृक्षमृगेतत् सूत्रे पुशग्रहणाऽभावे हस्त्यश्वादीनां सेनाङ्गत्वेन 'द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गनामि'त्यनेन नित्यद्वन्द्वो दुर्वारः स्यादित्यत आह-हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते पशुग्रहणं विकल्पार्थमिति।।

ननु उद्भुतावयवभेदविवक्षाऽनुद्भुतावयवभेदविवक्षाभ्यां रुरुपृषतम् रूरूपृषताः शुकवकम्, शुकवका इत्यत्र 'चार्थे द्वन्द्वः इत्यनेनैव द्वन्द्वसिद्धौ

विभाषा वृक्षमृगेति सूत्रे मृगशकुनिग्रहणं व्यर्थमिति चेन्न। तस्य नियमार्थत्वेन सार्थक्यात्। सचेत्थं नियमः, मृगाणां मृगैरेव द्वन्द्वः, शकुनीनां तैरेवेति। अन्यैस्तु सहेतरेतरयोग एवेत्याह- मृगाणांमृगैरेवेत्यादि।।

अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थमिति। अश्ववडवयोः पशुत्वाद्विकल्पासिद्धौ तयोर्ग्रहणं प्रतिपद्विविधानार्थम्। तथा च अश्ववडवमित्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ' इत्येतत्सूत्रं बाधित्वा स नपुंसकमि' त्येव भवतीति भावः।।

ननु 'विप्रतिषिद्धं चानधिकरणवाची'ति सूत्रं व्यर्थम् उद्भुतावयवभेदविवक्षया इतरेतरयोगद्वन्द्वे द्विवचनादेः, अनुद्भुतायवव भेदविवक्षया समाहारद्वन्द्वे एकवचनस्य च वचनमन्तराऽप्युपपत्तेरिति चेन्न। विरुद्धार्थानां द्वन्द्वस्यैकवद्भावश्चेदद्रव्यवाचिनामेवेति नियमार्थत्वेन तस्य सार्थक्यादित्याह- वैकल्पिकः समाहार इत्यादि। नियमफलञ्च, शीतोष्ण उदकेस्त इत्यत्र द्रव्यवाचित्वादितरेतरयोग एवेति भावः।।

विप्रतिषिद्धं किमिति। एतदग्रहणे अद्रव्यवाचिनामेव द्वन्द्व एकवद्वेति सामान्यतो नियमेऽविरुद्धार्थयोर्द्रव्यवाचिना-कवद्भावाविधना-न्नन्दकपाञ्चजन्यावित्येव स्यान्नतु नन्दकपाञ्चजन्यमित्यत-स्तद्ग्रहणमित्याशयेनाह- इह पाक्षिकः समाहारद्वन्द्वो भवत्येवेति। अनधिकरणवाचीत्यस्याग्रहणे शीतोष्णे उदकेस्त इत्यत्र पाक्षिकसमाहारद्वन्द्वस्याऽनिष्टस्यापत्तिरिति भावः।

ननु आनङ् ऋतो द्वन्द्व' इत्यस्य लक्ष्याऽनुरोधेन ऋदन्तानां द्वन्द्वे ऋदन्तस्य पूर्वास्याऽऽनङ्स्यादृदन्त उत्तरपद इत्यर्थस्वीकारे पितापुत्रावित्यत्राऽऽनङ् न स्यादृन्तानां द्वन्द्वाऽभावादृन्तोत्तरपद-परत्वाऽभावाच्चेत्याशंक्य समाधत्ते- पुत्रेऽन्यतरस्यामित्यत इति। उक्तसूत्रात्पुत्र इत्यस्य मण्डूकप्लूत्याऽनुवर्त्तनेन वाक्यभेदाऽऽश्रयणेन ऋदन्तानां द्वन्द्वे ऋदन्तस्य पूर्वस्याऽऽनङ् ऋदन्त उत्तरपदे ऋदन्तस्य पूर्वस्याऽऽनङ पुत्रशब्द इति द्विधार्थकरणान्नोक्तस्थलीया काचिदनुपपत्ति रिति दिक् ।

ननु 'आनङ् ऋतो द्वन्द्वे' इत्यतो द्वन्द्वपदानुवृत्त्यैव सिद्धौ पुनः 'देवता द्वन्द्वेचे' त्यत्र द्वन्द्वग्रहणम्व्यर्थमित्यत आह-पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थमिति। येषां सहचरणं प्रसिद्धन्तेषामेव द्वन्द्वे आनुङुत्तरपदे इत्येतदर्थन्द्वन्द्वग्रहणं तेन ब्रह्मा च प्रजापतिश्चेति विग्रहे ब्रह्मप्रजापतीत्यादावानङ्न्। एतयोरेकहविर्भागित्वेन सहचरणं न दृष्टं श्रुतञ्चेति भावः।। इति द्वन्द्वः।।

# अथैकशेषप्रकरणम्

६-अधिकरणत्वं स्वधर्मसंबंधसंयोगादिरूपसंबंधस्य-द्विनिष्ठतयाबदरादेरपि कुंडाद्याधारतापत्तेः। न च स्वधर्मसंबंधोऽधिकरणत्वं कुंडादिकं च न बदरादिधर्म इति वाच्यम् । स्वधर्मत्वस्य स्वाधेयत्वरूपतया आधेयत्वस्य चस्वनिष्ठाधिकरणतानिरूपकत्वेनान्योन्याश्रयप्रसंगात् । नाप्युत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयमधिकरणम् । उत्पत्तयेऽपेक्षणीयं कार्यस्य समवायिकारणं, स्थितये घटादेर्भूतलादिज्ञप्तये जात्यादेः समवायिसमवायादेस्स्वरूपसबंधीति वाच्यम् । अपेक्षणीयत्वस्य कारणस्वरूपत्वेनासमवायिकारणादावतिव्याप्तेः। समवायिकारणत्वं घटत्वादिज्ञप्तये घटादौ न संभवति। नापि तद्भिन्नत्वे सति तत्पतनं प्रतिसंयोगवन्मूर्त्तत्वमधिकरणत्वम् । पतनवन्मूर्ताधिकरणत्वस्य ब्रह्मांडादिधारकसंयोगाश्रयेश्वरे मूर्तत्वमुपात्तम्। मूर्तमात्रस्य विलक्षणतत्संयोगादिमत्त्वेन कस्यचित्पतनाप्रसिद्धावपि नाव्याप्तिः। गुणादेस्तत्समवायित्वं समवायादेस्तत्स्वरूपसंबंधित्वम् । एवं परंपरेति वाच्यम्। अननुगमनात् । सप्तम्या नानार्थत्वे चान्याय्यत्वात् । किंतु प्रतियोगित्वादिवदधिकरणत्वमधिकरणमितिप्रतीतिसाक्षिकः स्वरूपसंबधविशेषे चातिरिक्तम्, अतिरिक्तोवेत्यन्यदेतत् । एवमाधेयत्वमपि। इत्थं च गृहे स्थाल्यामोदनं पचतीत्यादौ पच्यर्थः अधः संपतनमधिवह्निसंयोगानुकूलकाष्ठवह्न्यादेर्व्यापार इत्येके। पच्यर्थो विक्लित्त्यवच्छिन्नाग्नितंडुलादिसंयोगवपाकज-रूपमित्यादिव्यवहारादित्यन्ये। उभयत्रापि गेहादेः साक्षात्तदाधिकरणत्वासंभवात् । कर्तृकर्मान्यतरद्वारा क्रियाश्रयस्वरूपाधिकरणत्वं सप्तम्यर्थः। तदाहुः। "कर्तृकर्मव्यवहितं साक्षाद्धारयति क्रियाम् ।। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणंस्मृतम्।।" वस्तुतः परंपरया आश्रयत्वमात्रं सप्तम्यर्थः। अत एव प्राङ्गणस्थेन दीर्घदंडादिकाष्ठादिचालनद्वारा गृहमध्ये पाककरणे गृहस्य कर्तृद्वारा क्रियानाश्रयत्वेपि गृहे पचतीति प्रयोगः। वह्निचैत्रादेः साक्षात्पाकगमनादिक्रियाश्रयत्वेऽपि वह्नौ पचति चैत्रो गच्छ तीत्याद्यप्रयोगात्परंपरयेत्युक्तम् । न चैवं कियाश्र यत्वस्यैव सप्तम्यर्थे क्रियाप्रयोगेन विना भूतले घट इत्यादिप्रयोगो न स्यादिति वाच्यम् । इष्टत्वात्। न हि क्रियारहितं वाक्यमस्तीति शाब्दिकाः। वस्तुतोधिकरणत्वमात्रमाधेयमात्रं वा सप्तम्यर्थः। क्रियाशक्यव्यर्थत्वात्। न च यत्क्रियायामन्वेति तस्य तत्क्रियाकारकत्वव्यवहारः। अत एव भूतले घट इति शून्यवाक्यशाब्दबोध

इति नैयायिकाः। अत्र भूतलनिष्ठाधिकरणतानिरूपको घट इत्यन्वयबोधः निष्ठत्वनिरूपकत्वं च संसर्ग इति प्रांचः। एवं सति निरूपकत्वसंबंधस्य प्रतियोगितानवच्छेदकत्वात् । भूतले न घट इत्यादौ नञर्थान्वयासंभवात्। आधेयत्वं। सप्तम्यर्थः तत्रच प्रकृत्यर्थ स्य निरूपकतया प्रथमांतस्याधिकरणतया चान्वये भूतलनिरूपिताधेय-त्वाश्रयोघटइत्यन्वयबोधः। निरूपितत्वमाश्रयत्वं संसर्ग इति नव्याः। "चर्मणि द्वीपिनं हंति" इत्यादौसप्तम्यर्थोनिमित्तत्वम् । तच्चोपदेश्यत्वम्। फलत्वेनचेच्छादिविषयत्वरूपम् । तत्राद्यं मशकनिवृत्तौ धूमं करोतीत्यादौ मशकनिवृत्तेः फलत्वात् । "चर्मणि द्वीपिनं हंति" इत्यादौ चर्मादेः सिद्धतया स्वत्वरूपफलवत्त्वेनेवेच्छाविषयत्वात् । तच्च प्रयोज्यत्वेन धात्वर्थेऽन्वेति। मशकनिवृत्तिविषयकेच्छाप्रयोज्यधूमकरणाश्रयः चर्मविषयकस्वप्रकारेच्छाप्रयोज्यद्वीपिचर्मकहननानुकूलकृतिमानिति वाक्यार्थ एवं "सीम्नि पुष्कलकोहत" इत्यादावपि "पुष्कलको गंधमृग" इति कोशात्। सा च "निमित्तात्कर्मयोगे" इत्यनुशासनाद्यत्किंचित्कर्मप्रकारकबोध-जनकधातुयोगे प्रयुज्यते तादृशबोधः। जनकता च सकर्मकस्य धातोः कर्मबोधकपदयोगेन। यथा द्वीपिनं हंतीत्यादौ। अकर्मकस्य तु कर्मविशिष्टस्यार्थशक्तया। यथा विद्या रजनीक्षये यदुदेतीत्यादौ उदेतीत्यस्योदयगिरिशिखरमारोहतीत्यर्थात्। तत्र रजनीक्षयस्य सूर्योदयाद्यन्यत्वेपि निमित्तत्वंज्ञानविषयत्वेनोद्देश्यतया लोकानां रजनीक्षयज्ञानार्थमुदेतीत्यर्थ इत्येके। एतद्वीपवृत्तियावद्रश्मिसंसर्गाभाव-विशिष्टस्य कालस्य जनितत्वात् । सूर्योदये तद्रश्म्युत्पादेन तत्प्रागभावनाशे विशिष्टफलनाशात् । रजनीक्षयेच्छाप्रयोज्यत्वं सूर्योदये। क्षयेइत्यन्ये। शरदिपुष्प्यंति सप्तच्छदा। इत्यत्रोत्पत्तिरपिसप्तम्यर्थः। शरदुत्पत्ति-कपुष्पाश्रयाः सप्तच्छदा इति वाक्यार्थः न तु शरदुत्पत्तिकपुष्पाश्रये चम्पकादावपि तथा प्रयोः स्यादिति वाच्यम् । सप्तच्छदस्य पुष्पाश्रयत्वे लब्धे तुल्यवृत्तिवेद्यतया पुष्पेष्वसप्तच्छदवृत्तिलाभात्तदवच्छेदेन शरदुत्पत्तिकत्वस्य च व्युत्पत्तिसिद्धत्वात्। चम्पकादिपुष्पत्वावच्छेदेन शरदुत्पत्तिकत्वाभावेनतथाप्रयोगाभावात्। धातोरेव सप्तच्छदीय-पुष्पत्वेनलक्षणेतिकेचित् । भावे सतिसप्तम्याः सामानाधिकरण्यमर्थः। गुणकर्मान्यत्वे सति सत्त्वादित्यतो गुणकर्मान्यत्वसमानाधिकरणसत्त्वबोधात्। तच्च क्वचित्कालिकं, क्वचिद्दैशिकम्। तत्राद्यं समानकालीनत्वं पर्यवसन्नम्। यथा गोषु दुह्यमानास्वागतः। अत्र सप्तम्यर्थे समानकालीनत्वे दोहनमात्रस्य निरूपकत्वेनान्वयः। महिष्यादिदोहनकालीनतया प्रयोगाभावात् , नापि गोदोहनत्वेन धातेरनुपस्थितेः। किंत दंडी पुरुषो गच्छतीत्यत्र यथा परंपरया

पुरुषविशेषणतयापन्नदंडसमानकालीनत्वं गमने भासते। तथा विशेषणकर्मता विशेषणस्यैव दोहनस्य। इत्थं च तादृशगोदाहेनसमान-कालीनतीतगमनानुकूलकृतिमानिति धीः। दुग्धास्वागत इत्यादौ तु तथान्यवः। आगमनदोहनस्यातीततया दोहनकालीनत्वस्य गमने बाधात्। किंतु वर्तमानध्वंसप्रतियोगिदोहनकर्मसु गोष्वित्यर्थत् । अतीतार्थे तादृशगोदोहनविशेषणध्वंसस्यसमानकालीनत्वमागमने भासते। तथा च तादृशगोदोहनध्वंसकालीनगमनानुकूलकृतिमानित्यन्वयबोधः। एवं गोषु धोक्ष्यमाणास्वागत इत्यादावपि। तादृशप्रतियोगित्वविशेषणप्रागभावस्य समानकालीनत्वं भासते। च सप्तम्यर्थे समानकालीनत्वेन प्रकृत्यर्थस्या नन्वयापत्तिः। तादृशगोदोहनकर्मत्वविशिष्टा गोः स्वविशेषणकर्मत्व-विशेषणदोहनाद्याश्रयत्वसंबंधेन कालेऽन्वयात् - इति बोध्यम् । "यस्य च भावेन भावलक्षणम् " इति सूत्रस्य यस्य क्रियया क्रियांतरं लक्ष्यते इति व्याख्यानात् । क्रिययोः सामानाधिकरण्ये सप्तमी तत्सूत्रेणानुशिष्टा। सा च न युक्ता। गुणकर्माऽन्यत्वे सति सत्त्वादित्यादौ सा न स्यात्तदापि गुणकर्मान्यत्वेसतिसत्त्वादित्यभियुक्तप्रयोगदर्शनात् । सूत्रतद्व्याख्यानयोर्भाव क्रियापदे धर्मपरे। तथा च यस्य धर्मेण धर्मात निरुक्तत्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमीति सूत्रार्थशेषः।

द्वन्द्वव्यवहारविषयत्वं द्वन्द्वत्वम्। परस्परानन्वितसमस्यमान-निखिलपदार्थबोधकसमासत्त्वं वा तत्त्वम्।

धवखदिरावित्यादौ खदिरादिपदस्य धवखदिरादिसाहित्याश्रये लक्षणा। धवखदिरादिपदशक्तिभ्यां वा परस्परानन्वितधवखदिरादिबोध-कत्वाल्लक्षणसंगतिः। तथाहि - खदिरादिपदे धवखदिरादिसाहित्याश्रये लक्षणा। धवत्वेन खदिरत्वेन धवखदिरादिवृत्तिद्वित्वबोधो न स्यात्। किंतु. धवद्वयखदिरद्वयबोधः स्यात्। विभक्तेः प्रकृत्यर्थतावच्छेदकव्याप्य-संख्याबोधकत्वव्युत्पत्तेः। अन्यथा घटावित्यादितो घटपटादिवृत्तित्वबोधापत्तेः। साहित्यं चैकक्रियान्वयित्वम्। धवखदिरादिद्वय-मात्रविशेष्यकबुद्धिविशेष्यत्वं वा। तव्द्याप्तं च न धवादिमात्र-गतद्वित्वमित्यदोषः।

न च तादृशसाहित्याश्रये द्वन्द्वस्य शक्तिरस्तु, अन्यलभ्ये शक्तेरयोगादिति मीसांसकाः। धवत्वखदिरात्वादिनैव बोध्यः। अन्वयानुप-पत्त्यभावाल्लक्षणा-नुपपत्तेः। सुपा प्रकृत्यर्थतावच्छेदकत्वेन प्रकृत्यर्थतावच्छेदकस्य तिङा च

स्वार्थान्वयित्वस्य वा व्याप्या संख्या बोध्यते इति धवखदिरादिवृत्तिद्वित्वमेव तथा। द्वयोरेव प्रकृत्यर्थत्वात्। अत एव चैत्रो मैत्रश्च गच्छतः इत्यादावपि विना साहित्यलक्षणां चैत्रमैत्रवृत्तिद्वित्वबोधः। (वस्तुतः सुपा प्रकृतिजन्यशाब्दबोधविषयत्वव्याप्यैव संख्या बोध्यत इति नियमस्तेन (न) धवद्वयवृत्तिद्वित्वबोधापत्तिरिति ध्येयम्।) नचाव्यवहितपूर्वपदस्यैव प्रकृतित्वात्प्रकृत्यर्थान्वित-स्वार्थबोधकत्वाच्च प्रत्ययानां खदिरापदार्थ एव विभक्त्यर्थान्वयसंभवो न धवादिपदार्थे (अन्यथा राजपुरुषमानयेत्यादितो राजानमान-येत्वादिबोधापत्तेः) इति वाच्यम्। अव्यीभावस्य पूर्वपदार्थ-प्राधान्यात्पूर्वपदस्यैव प्रकृतित्ववत् द्वन्द्वस्य पदार्थद्वयप्राधान्यात्पदद्वयस्यैव प्रकृतित्वात्फलबतात्तथैव कल्पनादिति। (विभक्तिमात्रेण स्वार्थान्वयि-त्वव्याप्ययसंख्या बोध्यते। प्रथमाया अपि पुंस्त्वाद्यर्थकत्वादित्यपि केचित्।)

स च द्वन्द्वो द्विविधः इतरेतरयोगसमाहारभेदात्। यत्रावयवार्थप्राधान्यं तत्रेतरेतरयोगः। प्राधान्यं विभक्त्यर्थान्वयित्वम्। अत एव द्विवचनबहुवचने तत्र। यथा धवखदिरौ धवखदिरौ धवखदिरपलाशा इत्यादौ।

यत्र संहतिः प्रधानं तत्र समाहारः। संहतिः साहित्यम्। साहित्यस्यैकत्वादेकवचनमेव। तत्र नपुंसकलिङ्गता चानुशासनात्। यथा हस्त्यश्वं, पाणिपादमित्यादौ। हस्तिनोऽश्वस्य च साहित्यमित्याकारिका चान्वयधीः। इत्थं च हस्त्यश्वमानयेत्यादौ साहित्ये सामानाधिकरण्यसंबन्धेन कर्मत्वान्वय इति प्राञ्चः।

नव्यास्तु हस्तश्वमित्यादौ हस्त्यश्वपदे शक्तिभ्यामेव हस्त्यश्वबोधके न तु साहित्ये लक्षणा। एकवचनं त्वनुशासनबलात्। समाहारसंज्ञा च नदीसंज्ञावत्पारिभाषिकी। अत एव हस्त्यश्वं द्रव्यमित्यादौ विना द्रव्यपदे लक्षणामन्वयबोधः। यदिच हस्त्यश्वं प्रमेयमित्यादौ समाहारवोधोऽनु-भवसिद्धस्तदा तत्र लक्षणेत्याहुः।

यत्तु तत्र समुच्चयार्थकचकारेण प्राधान्येन क्रियासंबन्धो विवक्षितो धवांश्छिन्धि खदिरांश्चच्छिन्धि पलाशांश्चच्छिन्धीत्यादौ, प्राधान्यं च छिदाक्रियाभेदः, यत्र चान्वाचयार्थकचकारेण प्रधानगुणभावेन स विवक्षितो धवं छिन्धि सामर्थ्ये खदिरं चेत्यादौ, यत्र च सपुत्रो गच्छतीत्यादौ पुत्रस्यैकक्रियान्वयित्वे विशेषणत्वेनैव तदन्वयस्तत्र द्वन्द्वाभावः। स हि साहित्यलक्षणायामेव निर्वहति तुल्यवदेकक्रियान्वयित्वस्य साहित्यस्योक्तेष्वभावात्।

अत एव चार्थे द्वन्द्व इत्यत्र चार्थः समुच्चयान्वाचयेतरो गृह्यते। अन्वाचयः समाहार इतरेतरयोगः समुच्चय इत्यर्थचतुष्टयस्य चार्थत्वात्। समहारः साहित्यम् , इतरेतरयोगः साहित्यविशिष्टः। अत एव यत्कर्तव्यं तदउदनया सहेत्यादावपि पत्न्याः सहत्वं नतु यसाहित्यम्। पत्न्याः कथंचिदनुमतिद्वारैवोपयोगेन व्यापारे साम्याभावादिति। तन्न।

चैत्रमैत्रौ स्थितिगतिमन्तावित्यादियथासंख्यस्थले एकक्रिया-न्वयित्वाभावेऽपि द्वन्द्वात्। नच तुन्यवत्सजाती-यविजातीय-विधेयान्वयित्वं साहित्यं वाच्यम्। तादृशसाहित्यलक्षणाया मानाभावात्। उक्तेऽषु क्रियाभेदविवक्षया प्रधानगुणभावविवक्षया प्रधानगुणभावविवक्षया विशेषणत्वविवक्षया च द्वन्द्वाकरणसंभवात्।

एतेन विभिन्नदेशकालावच्छेदेन धवखदिरादिनां छिदायां धवखदिरौ छिन्धीत्याद्यप्रयोगात्, एकदेशकालावच्छेदेनैकक्रियान्वयित्व-रूपसाहित्यावच्छिन्ने खदिरादिपदे लक्षणावश्यकीत्यपास्तम्। तत्र कालभेदविवक्षया द्वन्द्वाकरणसंभवात्। विभिन्नदेशकालावच्छेदेन छिदायामपि धवखदिरौ छिन्नावित्यादौ द्वन्द्वाच्चेति दिक् ।

पर्याययोर्घटकलशावित्यादिद्वन्द्ववारणाय पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वात् नीलघटयोरैक्यं, शिवरामयोरभेदः, इत्यादौ न द्वन्द्वानुपपत्तिः। नचैवं घश्च घटश्चेत्यादौ द्वन्द्वासंभवे तदपवादकस-रूपैकशेषानुपपत्तिः द्वन्द्वविषय एव तत्प्रवृत्तेरिति वाच्यम्। घटावित्यादौ सरूपैकशेषानङ्गीकारादेकेनापि घटपदेन नानाघटोपस्थापनसंभवात्स-कृदुच्चरित इति नियमाभावात्। अन्यथा पचन्तीत्यादावप्येकशेषापत्तेः। (गङ्गायां घोषमत्स्यावित्याद्यनुरोधेन युगपवृतिद्वयविरोधस्याप्यनङ्गीकारात्।) एकेनापि हरिपदेन सिंहत्वविष्णुत्वाभ्यां बोधसंभवाद्धरी इत्यादावपि नैकशेषः। हरिहरी इत्यादिद्वन्द्वाभावस्तु पदासारूप्यस्यापि द्वन्द्वनियामकत्वात्।

नचैवमेकत्वे च एकत्वानि चैकत्वानि, गुणौ च क्रिये च गुणक्रियाः, गुणक्रियाश्च गुणक्रिये च गुणक्रिया इत्यादावेकशेषोगुण-दीधितिकाव्यप्रकाशुक्तो विरुध्येत। इष्टत्वात्। हंसी च हसश्च हंसावित्यादौ लिङ्गभेदे एकशेषस्त्वनुशासनबलादिति शाब्दिकाः।

वस्तुतः 'सरूपाणामेकशो एकविभक्तौ' इतिसूत्रमेकविभक्तौ वचनभेदे एकशेषविधायकतया सार्थकम्। नच सविभक्तिकस्य द्वन्द्वो निर्विभक्तिकस्य

चैकशेषं इति नेदं युक्तम्। द्वन्द्वविषयेऽप्रवृत्तौ द्वन्द्वापवादकत्वायोगात्। प्रतिपदिकोत्तरं विभक्तेरावश्यकत्वेन निर्विभक्तिकप्रातिपदिकद्वयासंभवाच्च अन्यथा द्वन्द्वादिसमासोऽपि निर्विभक्तिकस्यैव स्यात्। पन्थानावित्यादाव-दन्तत्वाभावादेकशेषे समाससत्वाभावेऽपि विभक्तिलोपस्तद्धितान्त इवेति दीधितिविद्योतने विस्तरः।।५।।

५- ननु एकशेषस्य द्वन्द्वापवादत्वमिति द्वन्द्वापवादसङ्गत्यथ-'मेतदुत्तरमेकशेषारम्भं प्रदर्शयति- अथैकशेष इति। नचाऽपवादस्याऽपि सङ्गतित्वे, सप्रसङ्ग उपोद्घाटो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वे, षोढा सङ्गतिरिष्यते।। इत्यनेन षोढात्वकथनस्य विरुद्धत्वमिति वाच्यम्। अपवादेत्यनेनाऽपवाद्या-पवादकभवरूपप्रसङ्गनिर्वाहकसम्बन्धस्य सूत्रनेनाऽविरोधात्।।

वृद्धो यूना तल्लक्षणश्चेदिति। अत्र सूत्रे वृद्धपदेन अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्य्यपरिभाषितस्य पाणिन्युक्तगोत्राऽपरपर्य्यायस्य ग्रहणम्। न च वृद्धपदेनेदृशस्य ग्रहणे किं प्रमाणमिति वाच्यम्। कृत्रिमेन यूना साहचर्य्यस्यैव तत्र प्रमाणत्वादित्यत एवाह मूले गोत्रं शिष्यत इति। गोत्रयुवप्रत्ययमात्रेति। अत्र प्रत्ययपदस्य प्रतीति परत्वाद्गोत्रयुवत्व-प्रतीतिमात्रेत्यर्थः तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इत्यस्य सिद्धिः। एवशब्दार्थमात्रं, तेन प्रत्यार्थकृत्स्नादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदादाह- कृत्स्नमिति। एतदेव विकारलभ्म्यन्तत्कृत एव विशेषश्चेन्नतु तत्कृतातिरिक्ति इत्यर्थः। सूत्रे तल्लक्षणः किमित्यस्य तल्लक्षण एव किमित्यर्थः। प्रत्युदाहरति- भागवित्तिभागवित्तिकाविति। भागवित्तस्य गोत्राऽपत्यं भागवित्तिः। अस्मादपत्येऽर्थे इञ् यूनि अर्थे 'बृद्धाट्ठक सौवीरेषु बहुलमि'ति कुत्सायां ठकि,' तस्य कादेशे द्वितीयस्य सिद्धिः। अत्र कुत्सासौवीरत्वयो-रधिकयोरपेक्षणाद्युवत्वमात्रकृतवैरूप्याऽभावाच्चैकशेष इति बोध्यम्।। कृस्नं किमिति। एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमर्थेति प्रश्नः। उत्तरयति- गर्गवात्स्यायनाविति। अत्र प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतमिति नैकयशेषः। तल्लक्षणविशेष इत्येव सामर्थ्यात्तल्लक्षण एवेति लाभे स्पष्टार्थमेवकारग्रहणिमति बोध्यम्।६

नपुंसकमनपुंसवकेनैकवच्चेति। नन्वान्तर्य्यात्त्वर्थचशब्दबलाच्च सूत्रघटकस्याऽन्यतरस्यामित्यस्यैकवच्चेत्यनेनैव सम्बन्धो नत्वेकशेषेणेत्यत आह- तच्चैकवद्वेति। अनपुंसकेनेति किमिति। एतद्ग्रहणाऽभावे नपुंसकेनापि द्वन्द्वे एकशेषापत्तिः। शुक्लञ्च, शुक्लञ्च, शुक्ले इति। ननु

'नपुंसकमनपुंसकेनैकवच्चाऽन्यतरस्यामि'त्येवं सूत्रेकरणेऽपि यत्राऽनेनैकशेषस्तत्रैकवद्भावो भविष्यतीति प्रकृतसूत्रेऽस्य ग्रहणं व्यर्थमिति चेन्न। अनपुंसकेन सहोक्तौ नपुंसकस्येकशेषस्तस्यैवैकवद्भाव इति बोधनार्थन्तस्याऽऽवश्यकत्वेन सार्थक्यात्। तेन नाऽन्यसूत्राणां समाहारद्वन्द्वविषये, प्रवृत्तिरिति बोध्यम्। ननु 'सरूपाणामि'ति सूत्रस्य तर्हि समाहारविवक्षायाम-प्राप्त्याऽपवादाऽभावाद्घटघटमिति समाहारविवक्षायान्द्वन्द्वः प्राप्नोति चेन्न। अनभिधानाद्घटघटमिति द्वन्द्वाप्राप्तेः। एकशेषविषये घटघटमिति द्वन्द्वव्यावृत्त्यर्थमनभिधानस्याऽऽवश्यकतद्द्वन्द्वमात्रस्यैकशेषविषयेऽनभि-धानमाश्रित्यैकशब्दस्याऽनेकार्थत्वञ्चाश्रित्य प्रत्याख्यातमेकशेषप्रकरणम्भाष्ये। एकशब्दस्यानेकर्थत्वाऽभावे एकशेषाऽऽरम्भेऽपि गार्ग्यावित्यतो गार्ग्यायणस्य बोधो न स्यात्तस्य तदर्थकत्वाऽभावात्। शुक्लञ्च शुक्लाच शुक्लश्चेति विग्रहे शुक्लानीत्येतत्सूत्रोदाहरणम्। तत्र विग्रहवाक्ये पटपदोपादानं शुक्लादिपदानां गुणे पुंस्त्वाद्गुणिपरत्ववबोधनायेत्यलम्॥

श्वशुरः श्वश्वा। ननु पितृशब्देन मातापित्रोः श्वशुरशब्देन श्वश्रूश्वशुरबोर्लक्षणया बोधसम्भवादिदं पिता मात्रेति च सूत्रद्वयं व्यर्थम्। न यथा सरूपाणामित्यादिसूत्रसमूहस्य द्वन्द्वव्यावृत्त्यर्थमावश्य-कत्वन्तथैवैतत्सूत्रद्वयमपि द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यम्। पक्षे द्वन्द्वस्यापीष्टापत्तेः। एवञ्च तदवस्थैवोक्तसूत्रद्वयस्य वैयर्थ्यशंकेति चेन्न। पितृश्वसुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोर्द्वन्द्वविषये प्रयोगव्यावृत्तये सूत्रद्वयस्यावश्यकत्वात्। न च द्वन्द्वविषये तादृश प्रयोगस्याऽनभिधानादेव वारणसमीवादनारम्णीयमेव सूत्रद्वयमिति वाच्यम्। अनभिधानाऽऽश्रयणेन प्रत्याख्यानस्याऽनौचित्यादिति भावः।

त्यदादीनि सर्वैर्नित्यम्। अत्र सूत्रे द्विपर्यन्तानामिति नियमो न प्रवर्त्तते अहञ्च आवांञ्च भावादिति भाष्योदाहरणात्। उक्तनियमप्रवृत्तौ तु अस्मच्छब्दस्य द्विपर्यन्तानामित्येतन्मध्येऽसत्त्वात्तस्य शेषानापत्त्या भाष्योदाहरणाऽसङ्गतिरिति भावः। इत्येकशेषः॥

## अथाव्ययीभावः

नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वम्।

अब्राह्मणोऽर्धपिप्पलीत्यादिवारणाय नियमत इति। उपकुम्भं, निमक्षिकमित्यादौ कुम्भादिपदस्य कुम्भादिसंबन्धिनि लक्षणया कुम्भादिसंबन्धि समीपं, मक्षिकादिप्रतियोगिकोऽभाव इत्यादिधी। चन्द्र एव मुखं, भूतलं न

घट इत्यादाविवाद्यर्थे चन्द्रादेर्भेदेनाप्यन्वयात्, अव्ययनिपातातिरिक्तप्रातिपदिकार्थ एव तादृशप्रातिपादिकार्थ-स्याभेदेनान्वयात्, कुम्भादिपदवाच्यस्यैव सामीप्यादौ भेदेनान्वय इति तु नव्याः।

नचोन्मत्तगङ्गमित्यादावन्यपदार्थप्रधानेऽव्याप्तिः। अव्ययीभावानुशिष्ट-नपुंसकलिङ्गत्वार्थ संज्ञाविषये बुहव्रीहौ गौणाव्ययीभावत्वस्वीकारात्। संज्ञान्यविषये तु उन्मत्तगङ्गो देश इत्येव भवति। मध्येङ्गमित्यादौ मध्वादिशब्दे एतन्तत्वं निपात्यते। गङ्गासंबन्धि मध्यमित्याद्यन्वयधीः।।६।।

## उपपदसमासः

कुम्भकारः क्षीरपायी खट्वाशायी इत्याद्युपपदसमासे कुम्भादिपदं लक्षणया कुम्भविषयकक्षीरकर्मकखट्वाधिकरणकादिपरम्। नामार्थधात्वर्थयो-र्भेदेनान्वयस्याव्युत्पन्नत्वात्।।

विरूपैकशेषे पितरावित्यादौ लुप्तमातृपदस्मरणान्मातृत्वपितृत्वाभ्या जनकशरीरत्वेन पितृपदलक्षणया वा मातापित्रोरन्वयधीः। पितृपदं शक्त्या पितुर्लक्षणया मातुर्बोधकमित्यन्ये। एवं श्वशुरावित्यादावपि पतिपत्नीजनकशरीरत्वादिना प्रातिस्विकरूपेण बोधः।

सरूपैकशेषे दम्पतीपूजाप्रकरणे ब्राह्मणावानयेत्यादौ ब्राह्मणीपद-स्मरणाद्ब्राह्मणत्वब्राह्मणीत्वाभ्यां ब्राह्मणत्वेनैव वा स्त्रीपुंब्रासह्मणयोर्बोधः। पुंस्त्वमयोग्यत्वात्स्त्रियां नान्वेति। विभक्तिरेव वा (शक्त्या) पुंस्त्वस्य लक्षणया स्त्रीत्वस्यापि बोधिका। ब्राह्मणपदमेव वा शक्त्या ब्राह्मणत्वेन लक्षणया ब्राह्मणीत्वेन बोधकम्। एवं हंसावित्यादावपि। शिवौ नमस्कुर्यादित्यादौ शिवपदं लक्षणया शिवदुर्गान्यतरत्वेन किंवा शक्त्या शिवत्वेन लक्षणया दुर्गात्वेनैव बोधकम्। एवमन्यदप्यूह्यमिति।

## अर्थ सर्वसमासशेषप्रकरणम्

वृत्तिनिरूपणप्रस्तावादाह- कृतद्धित्तसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय इति। परार्थाऽभिधानं वृत्तिरति। परशब्देन परपदार्थो गृह्यते, अर्थशब्देन स्वस्यार्थोगृह्यते, परेण पदार्थेन युक्तो यः स्वस्याऽर्थः स परार्थस्तस्य याऽभिधाजन्योपस्थितिस्तत्करणत्वमिति तदर्थः। इतरपदार्थान्वित-स्वार्थविषयकाऽभिधाजन्योपस्थितिजनकत्वमिति फलितोऽर्थः। यद्वा परेण प्रधानशब्देन शब्दान्तरार्थस्याऽभिधानं विशेषणत्वेन ग्रहणं तत्करणमित्यर्थः। यत्रत्यप्रधानपदेनेत्तरविशेषण कस्वार्थस्यैवोपस्थिति-स्तत्करणमितियावत्। यद्वा

परेणाऽप्रधानशब्दे नाऽन्यशब्दार्थस्य विशेष्यत्वेन ग्रहणमित्यर्थः। वृत्तिरिति शेषः। साचाऽवयवशक्तिसहकृतसमुदायशक्तिसाध्या, अवयवशक्तिर्लोकसिद्धा, शास्त्रकल्पिता च समुदायशक्तिरिति। तद्धितादिप्रत्यये समुदायस्य वृत्त्याश्रयत्वादेषामौपचारिको वृत्तित्वव्यवहारः प्राचाम्। सा च वृत्तिः समर्थः पदविधिरिति परिभाषा लभ्या, तत्र समासतद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वान्मानान्तरसिद्धैकार्थीभावस्य सत्त्वाच्च स्पष्टैव परिभाषाप्रवृत्तिः। उपपदनिमित्तकानां कृतामपि स्पष्टमेव पदविधित्वम्। तत्साहचर्य्येणऽन्यत्रापि पदविधित्वं बोध्यम्। अत एव पाचकादीनां क्रियाकारकभावसम्बन्ध-प्रवृत्तिनिमित्तकत्वमूलकः क्रियाशब्दत्वव्यवहारः। एकशेषेऽपि द्वन्द्वस्याऽनुवर्त्तनादेतविषये एकशेषविधानादेकार्थीभावस्याऽऽवश्यकत्वम्। वस्तुतस्तु, पराऽर्था ऽन्वितस्वार्थोपस्थाकत्वाऽभावादेकशेषस्य वृत्तित्वे मानाऽभावः। शिष्टपदेन स्ववृत्यैव तत्तसमूहाथोपस्थानस्य भाष्ये स्पष्टप्रतिपादनात्। एकशेषस्य वृत्तित्वाऽभावादेव 'समर्थः पदविधिरि' त्यस्या ऽधिकारत्वपक्षे नोक्त एकशेषसङ्ग्रहो भाष्ये इत्यवसेयम्। सनादिषु क्यजादेः सुबन्ताद्विधानेन स्पष्टमेव पदविधित्वमिति। स्वभवत एव वृत्त्यवृत्त्योः सिद्धत्वाद्भाववचनं न कार्य्यमिति तत्रत्याख्यानपरभाष्यप्रमाणयात्सुलभ एवैकार्थीभावः सनीति बोध्यम्। प्रातिपदिक प्रकृतिकणिचाप्यैकार्थी भावः सुघट एवेति। वाक्यमिति। तत्र तत्समासघटकपदानान्तत्तसमासप्रवृत्तियोग्यविभक्त्यान्तानां पृथक् प्रयोगरूपमित्यर्थः। संज्ञाविषयसमासे वाक्येन संज्ञाऽनवगमेऽपि वृत्ति घटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव नित्यसमासव्यवहारस्तु तस्य वाक्यस्य वृत्ति समाप्त्यर्थत्वाऽभावाद्गौणौ बोध्यः। अविग्रह इति। लौकिकविग्रहरतित इत्यर्थः। नित्याऽधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्याऽभावात्। एवञ्च वृत्तिवैकल्पिकत्वबोधनं वृत्तिघटकपदस्वरूप बोधनं वृत्तिघटकपदार्थबोधनञ्च विग्रहप्रदर्शनफलम्बोध्यम्। अश्वपदेति। समस्यमानयावत्पदाघटित इत्यर्थः। समासविभाजकोपाश्विगणनाय आवश्यकत्वादाह- सुपां सुपा तिङा नाम्नेत्यादि। अथ तिङामित्यतः प्राक्सर्वत्र तिङामित्यस्य सम्बन्धः। अत्र सुपां तिङेत्यनेनैव तिङा सुबन्तेनेत्यस्य लाभात्समासस्य पञ्चविधत्वमेव युक्तम्। उभयत्रापि सुप्तिङ्घटितत्व-स्याऽविशिष्टत्वादित्यलम्। इति सर्वसमासशेषः।।



डॉ0 रामनारायणाचार्य
सेवानिवृत्त–आचार्य
गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ,
आजाद पार्क, इलाहाबाद

## लेखक के प्रकाशित/सम्पादित/अप्रकाशित ग्रन्थों का विवरण

1. स्फोटमीमांसा संस्कृत अकादमी संस्कृत–संस्थान, लखनऊ, उ0प्र0 द्वारा पुरस्कृत। 2. मानवता सन्देश प्रथम संस्करण, 1992 ई0 में द्वितीय संस्करण श्रावणी पर्व 1998 ई0। 3. सारस्वतमुपायनम् गीता जयन्ती 1992 ई0 उ0प्र0 संस्कृत (प्रकीर्ण काव्यम्) अकादमी (संस्थान द्वारा पुरस्कृत)। 4. मिश्र निबन्धावली (शास्त्रीय शोध–निबन्ध रत्नावली) 1993 संस्कृत संस्थान, लखनऊ, उ0प्र0 एवं संस्कृत अकादमी दिल्ली व राजस्थान संस्कृत अकादमी द्वारा पुरस्कृत। 5. भारतीयसमङ्गलायतनम् प्रकीर्णकाव्यम् स्वर्ण जयन्ती वर्ष 1997 ई0 प्रो0 भोलाशङ्कर व्यास, वाराणसी, प्रो0 ताताचार्य रामानुजाचार्य व ब्रह्मर्षि कलानाथ प्रभृति विद्वानों द्वारा प्रसांशनुसंशा पत्र प्राप्त। 6. शाकदीपीय मगब्राह्मणविमर्शः 1963 ई0। 7. श्रीवैष्णवाचार्य प्रपत्तिः प्रकीर्णकाव्यम् वसन्तपञ्चमी संस्कृत वर्षम् 1999 ई0। 8. संस्कृतवर्षाभियानम् (कारगिलविजयः) संस्कृत संस्थान, लखनऊ उ0प्र0 शासन द्वारा कालिदास पुरस्कार से पुरस्कृत है, 2001 ई0। 9. श्री आल्वार–सूरि–प्रस्तुतिपूर्ण गुरुपरम्परा, 2002 ई0। 10. संस्कृत सदग्रन्थों का शोधसार भारतीय संस्कृति गौरव 2002 ई0। 11. भगवदाराधनविधिः 2002 ई0। 12. ब्रह्मकर्म भगदाराधनविधिः 2002 ई0। 13. ब्रह्मविद्या प्रकाश 2002 ई0। विशिष्ट विद्वान् पुरस्कार भी उ0प्र0 संस्कृत संस्थान, लखनऊ से प्राप्त।

### सम्पादित प्रकाशित ग्रन्थ

1. सिद्धान्तरहस्यम्, 2002 ई0। 2. शब्देन्दुशेखर की श्रेधरी टीका, 2002 ई0।

### अप्रकाशित ग्रन्थविवरण

1. स्वरसाधनाविमर्शः, 2. प्राचीन राजधर्मपथप्रदर्शनम्, 3. भजन–संग्रह (स्वरचित), 4. मिश्रनिबन्धावली (द्वितीय भाग), 5. श्रीवचनभूषणम्।